# प्रवचन-पारिजातः

(शारद-ज्ञान-महोत्सवे वितरितं व्याख्यानपञ्चकम्)




श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्

(मानितविश्वविद्यालयः)

नवदेहली-११००१६

संस्कृतविद्यापीठग्रन्थमालायाः त्रयोदशं पुष्पम्

# प्रवचन-पारिजातः

(शारद-ज्ञान-महोत्सवे वितरितं व्याख्यानपञ्चकम्)




श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्

(मानितविश्वविद्यालयः)

नवदेहली-११००१६

# पुरोवचनिका

महतः प्रमोदस्यायमवसरप्रसरो यदत्र विद्यापीठे 'शारदा-ज्ञानमहोत्सव' नाम्नाऽन्याभिः प्रवृत्तिभिः सहैकाऽत्यावश्यकी प्रवृत्तिरपि कतिभ्यश्चिद् वर्षेभ्यः प्रचलति यस्यां प्रवृत्तावद्य यावद् नैकशो विद्वद्भिः स्वीयानि चिन्तनपरिपूर्णानि व्याख्यानानि वितरितानि । प्रायः प्रतिवर्षं विद्यापीठमिदं तानि तानि व्याख्यानानि सुसम्पाद्य पुस्तकरूपेणापि प्रकटयत्येव ।

अत्र विद्यापीठ एवंविधप्रवृत्तीनां प्रारम्भत एव सुसंयोजनेन पूर्वंप्राचार्याः संस्कृतविदुषां विद्यार्थिनाञ्च परमोपकारं साधितवन्तः । सैवेयं परम्परा चिराय प्रचलन्ती संस्कृतक्षेत्रे महतीं ख्यातिं लब्धवतां स्वीयं च निखिलमपि जीवनं संस्कृत-साहित्यस्य संरक्षणेऽध्ययनेऽध्यापने संशोधने प्रकाशने वा व्यतियापयतां मनीषिणां नवनीतोपमैः कतिभिश्चिद् व्याख्यानैरेव गर्गरिकायां सागर-सम्पूरणोक्तिं सार्थयतां परमयाऽनुकम्पया वर्धमाना भवेदिति मनीषितं नः ।

अस्मिन् वत्सरे व्याख्यानप्रदानायास्मदभ्यर्थनां स्वीकृत्य विद्वद्वरेण्याः श्रीचारुदेव-शास्त्रिमहाभागास्तथा श्रीश्रीजीवन्यायतीर्थमहाभागा अस्माननुगृहीतवन्तः । यथासमयं दि. २६-२-७३ तः १-३-७३ दिनाङ्कं यावच्च भाषणान्यभूवन् ।

एतेषु व्याख्यानेषु 'व्याकरण-विषयमधिकृत्य भाषमाणैः, समादरणीय-श्रीचारुदेव-शास्त्रिमहाभागैः प्राधान्येनोपसर्गाणां विभिन्नाभिर्दृष्टिभिः पर्यालोचनं विहितम् । संस्कृत-भाषायां प्रादय उपसर्गा धात्वादीनां सहयोगमाश्रित्य किं किं महत्त्वं समाश्रयन्ते ! के च तेषा-मुपकाराः ? वैदिकसाहित्ये लौकिकसाहित्ये च प्रयुञ्जाना इमे कीदृशमर्थजातं प्रवर्तयन्ति विवर्तयन्ति, वर्धयन्ति न्यूनीकुर्वन्ति वा? एतेषां साहचर्येण च धातूनां सकर्मकाकर्मकत्वयोः किं स्वरूपं कतमया प्रक्रियया साध्यते ? इत्यखिलमपि संस्कृतसाहित्यमालोड्य सोदाहरणं सरलया सरसया सुपर्वसरस्वत्या प्रतिपादितमिदं सत्यमेव नवनीतायेत । अत्र वेदेषु पुराणेषु काव्येषु सुभाषितेषु च तत्र तत्र प्रयुक्तानि सोपसर्गपदान्युदाहृत्य सुबहूनि निदर्शितानि येषां प्रकृतार्थाः प्रयुज्यमानार्था उपसर्गसत्त्वे सञ्चरितार्थाः क्वचिच्च सोपसर्गपदप्रयोगेषु सत्स्वपि फला-भावार्थाः सुतरां सूक्ष्मसमीक्षासरणिसंसृष्टा विद्वज्जनमनोरञ्जका विचार-विवेकविमृष्टा अत्र परिचायिताः । अवश्यमेवैष विषयोऽद्य विदुषां परिशीलन-पेशलः स्यादिति ।

द्वितीयैरप्यद्वितीयैः सम्माननीयश्रीश्रीजीवन्यायतीर्थमहाभागैश्च वेदान्तविषयमधिकृत्य 'वर्तमानभारते वेदान्तवादस्योपयोगित्वम्' विवेचितं यत्र पूर्वेषामाचार्याणां वेदान्तवाद विचारा-णामुपस्थापनपूर्वकं साम्प्रतिके स्वतन्त्रे भारते वर्तमानानां वर्तिष्यमाणानां च सुबहूनां समस्यानां

समाधानं वेदान्ताश्रयेण सुसमञ्जसमिति सम्यक् प्रतिपादितम् । कविवराणामेतेषां भाषण-सरणिरतीव काव्यात्मिका पद्यगद्यमण्डिता च । विषयप्रतिपादनविधावाचार्यवर्यैरेतैः प्राधान्येन वेदान्तशास्त्रस्य त्यागसहकृतभोगवादस्य, अनियन्त्रितप्रसारताप्रवृत्तिमार्गस्यावरोधनस्य, व्यवस्थितार्थमर्यादासरक्षणस्य, अध्यात्मवादोन्नयनस्य, देहेन्द्रियसङ्घातरूपमनुष्यकलेवरं प्रति विरागभावनायाः, आहारविहारादिनियन्त्रणस्य, शिक्षासरणिपरिवर्तनपूर्वकमुदात्तज्ञान नस्य चावश्यकता प्रदर्शिता । द्वितीये व्याख्याने वेदान्तस्वरूपं विमर्शयद्भिश्च भिन्न-भिन्नानां दर्शनानां दृष्टीः परिचाय्य वेदान्तस्याद्वैतप्रतिपादनमेव लक्ष्यमिति स्पष्टीकृतम् । प्रान्ते च वेदान्तवाणी विश्वमानवानां भावगतां संहृतिमभिलक्ष्य प्रवर्तितेति तत्रत्या विश्वजनीनभावाः सर्वप्राणिषु सर्वव्यापक एक एवात्मा विराजत इति विनिश्चित्य 'सङ्गच्छध्वं संवदध्वं सं वो मनांसि जानताम्' इति समाहृत्य 'आब्रह्मस्तम्बपर्यन्तं जगत् तृप्यतु' इति चावधार्य राष्ट्रसमुन्नत्यै प्रेरितम् ।

एतदेव भाषण-पञ्चकं 'प्रवचन-पारिजात'नाम्ना पुस्तकेऽत्र सङ्कलय्य प्रकाशितम् । अनुसन्धान-विभाग-प्रवर्तितायाश्चाध्ययनमालायाः प्रथमे कुसुमे चाप्येतेषां प्रकाशनमन्यैर्गवेषणा-पूर्णैर्लेखैः सह सम्पादितमिति सर्वेषां सुरसरस्वतीसमभ्यर्चकानां तोषाय स्यात् ।

अस्य ग्रन्थस्य (अध्ययनमालायाः प्रथमस्य कुसुमस्य च) श्रीलालबहादुरशास्त्रीकेन्द्रीय-संस्कृतविद्यापीठद्वारा प्रकाशनायानुमन्वानानां-राष्ट्रियसंस्कृतसंस्थान-निदेशकानां डॉ. रामकरण-शर्ममहाभागानां प्रकाशनसमितिसदस्यानाञ्चाभारमूरीकरोमि मुद्रणकर्मणि च 'आनन्द प्रिंटिंग प्रेस मुद्रणालयाधिकारि श्रीआनन्दप्रकाशसिंघलमहाभागेभ्यश्च धन्यवादान् वितीर्य ।

विदुषामाश्रवः

डॉ. पुष्पेन्द्रकुमारः शर्मा

शारद-ज्ञान-महोत्सवे विहितं व्याख्यानत्रयम्

- किमुपकारा उपसर्गाः किमर्थकाश्च ?
- वेदे धातूपसर्गयोगः ।
- उपसर्गवशाद् धातूनां सकर्मकत्वाकर्मकत्वे ।

# किमुपकारा उपसर्गाः किमर्थकाश्च

वैयाकरणानां निकाये उपसर्गा द्योतकाः, उपसर्गा वाचकाश्चेति द्वौ वादौ प्रथेते। उपसर्गाश्च पुनरेवमात्मकाः ससाधनां क्रियामाहुरिति भाष्यं विवृण्वानः कैयटः प्राह—क्रियोपसर्जनं साधनमाहुः। अतो वैयाकरणा अपि पार्थगर्थ्यं नैव निह्नुवते। स वाचको विशेषाणां सम्भवाद् द्योतकोऽपि वा। शक्त्याधानाय धातोर्वा सहकारी प्रयुज्यते ॥ (वा० प० २।१८८) इति हर्युक्तेश्च।

**प्रथमवादमधिकृत्य तावद् ब्रूमः—**

न निर्बद्धा उपसर्गा अर्थान्निराहुरिति। नामाख्यातयोस्तु कर्मोपसंयोगद्योतका भवन्ति इति निरुक्ते। अयमर्थः। चत्वारि पदजातानि नामाख्याते चोपसर्गनिपाताश्च यथा नामाख्यातयोर्निपातस्य च वाक्ये पृथक्पदत्वेन प्रयोग उपलभ्यते न तथोपसर्गस्य। उपसर्गस्य धातुयुक्तस्य प्रयोगोपलम्भात्तस्य स्वकः कोऽप्यर्थो नास्तीति कल्प्यते। धातोरेवार्थविशेषं द्योतयन्त्युपसर्गास्तेनैवार्थवन्तो भवन्तीति शाकटायनाचार्यस्य दर्शनम्। तदिदं दर्शनं धातुष्वनेकार्थेषु सत्स्वेवोपपद्यते इति तावद् धातूनामनेकार्थतोपपाद्यते। अत्राहुरभियुक्ताः—क्रियावाचित्वमाख्यातुमेकैकोर्थो निर्दर्शितः। प्रयोगतोऽनुसर्तव्या अनेकार्था हि धातवः ॥ इति। एतदुक्तं भवति—धातुपारायणेऽर्थनिर्देशो निदर्शनाय कृतो न परिगणनाय। निर्दिष्टार्थेभ्यो व्यतिरिक्ता अपि धात्वर्था भवन्तीति। अत एव कलिवली कामधेनू इति प्रथते प्रामाणिकोक्तिः। किञ्च धातुपाठेऽन्तरप्यनेकार्थताया लिङ्गमस्ति। कगे नोच्यते, वनु च नोच्यत इति यद्विशिष्यार्थो नोक्तस्तत्र धातूनामनेकार्थता हेतुरिति तद्व्याख्यातारः। कुर्द खुर्द गुर्द क्रीडायामेवेत्येवकारोऽप्यत्र लिङ्गम्। राधोऽकर्मकाद् वृद्धावेवेति चापि लिङ्गान्तरमुक्तार्थोपस्तम्भकम्। अत्र एवकारो भिन्नक्रमः। यदा राधिरकर्मकस्तदैव श्यनं लभते यथा वृद्धाविति तदर्थः। तेनान्यत्रार्थेऽप्ययमकर्मकः सञ्श्यनं लभते यथा दैव-पर्यालोचने—देवदत्ताय राध्यति गर्ग इति। दृश्यन्ते च प्रयोगा अनिर्दिष्टार्थेषु धातूनामिति नैतद् रिक्तं वचः। तद्यथा वपिर्बीजसन्ताने पठितश्छेदनेपि वर्तते—वपति केशानिति। करोतिः करणेऽभूतप्रादुर्भावे पठितो निर्मलीकरणेपि दृश्यते—पृष्ठं कुरु। उन्मृदानेति गम्यते। ईडिः स्तुतौ पठितः प्रेरणायामपि प्रयुज्यते—अग्निर्वा इतो वृष्टिमीट्टे मरुतोऽमुतश्च्यावयन्तीति। चर्चयतिरध्ययने

कीर्तितः—न केवलं चर्चापदानि व्याख्या भवतीति । विलेपनेपि वर्तते चन्दनचर्चित-भालः । चर्चा चार्चिक्यं स्थासक इति चामरः । कितिर्निवासे रोगापनयने च पठितः —निकेतयत्यत्रेति निकेतनं गृहम् । चिकित्सति मन्दं वैद्य इति । ज्ञाननिग्रहनाशन-निमन्त्रणेष्वपि दृश्यते—केतयत्यनेनेति केतनं केतुः । शत्रुं चिकित्सति । सस्यार्थे क्षेत्रे तृणानि चिकित्सति । उन्मूलयतीत्यर्थः । श्राद्धे केतयति विप्रम् । निमन्त्रयत इत्यर्थः । केतितस्तु यथान्यायं हव्यकव्ये द्विजोत्तम इति च मानवे धर्मशास्त्रे (३।१९०) । शंसतिः स्तुतौ पठितो हिंसायामपि वर्तते—नृन्शंसति हिनस्तीति नृशंसः । नृशंसो घातुकः क्रूर इति चामरः । चक्षिङ् व्यक्तायां वाचि पठितः । हिंसायामपि वर्तते—नृचक्षा राक्षस इति चक्षिङः ख्याञ् (२।४।५४) इति सूत्रे काशिका । कृपू सामर्थ्ये इत्ययं पठित एष धातुः कर्तनेपि व्यवह्रियते—क्लृप्त-केशश्मश्रुर्यतिरिति । वसतिर्निवासे पठितोऽशनेपि वर्तते । तिसृणां हि स्थानं परम-दुश्चरमित्यत्र भारते (वन० २९६।५) तथा दर्शनात् । अश्यर्थस्थ नेति वार्तिक-लिङ्गाच्च । एवं स्थिते उपसर्गैः किं क्रियते । तेन तेन धातुना सहोक्ता उपसर्गास्त-त्तद्धात्वन्तर्हितांस्तांस्तान् अर्थानुद्भावयन्तीत्यत्रैव पर्यवस्यति तेषां कृत्यम्, न कृत्यान्तरमस्ति । वधो घातो विवधश्च विहङ्गिका । हन हिंसागत्योरिति धातोर्वि-शब्देन गत्यर्थता समुद्भाव्यते । विशिष्टो वधो गमनमत्रेति व्युत्पत्तेः । तमिममर्थं रुचिरया कविपद्धत्या निबघ्नाति शास्त्रकोविदः कविर्माघः—

**सन्तमेव चिरमप्रकृतत्वादप्रकाशितमदिद्युतदङ्गे ।**
**विभ्रमं मधुमदः प्रमदानां धातुलीनमुपसर्ग इवार्थम् ॥ (१०।१५)**

भङ्ग्यन्तरेणापि द्योतकतोपसर्गाणां शक्या प्रसाधयितुम् । यदि नामोपसर्ग-सहकारेण यं यमर्थं धातवो ब्रुवन्ति तं तं केवला अपि ब्रुवीरंस्तदोपसर्गा द्योतका इत्यर्थादापद्यते । तेनानेकार्थता धातूनां प्रसिध्यतितराम् इति काश्चिद् दिशोऽनेकार्थ-वाचिताया उदाहरामः । चरतिर्गतिभक्षणयोः पठितः विपूर्वस्तु भ्रमणे पर्यटने वर्तते—'अधिज्यधन्वा विचचार दावम्' (रघु० २।८) केवलोपि तत्रार्थे—वयं हंसाश्चरामेमां पृथिवीं मानसौकसः (भा० ८।४१।१३) । चिञ् चयने इति धातुः प्रेणोपेन वोपसृष्टो वृद्धौ वर्तते, प्रचीयन्तेऽस्य गात्राणि, उपचीयन्ते वा । केवलोपि— 'चीयते बालिशस्यापि सत्क्षेत्रपतिता कृषिः' (मुद्रा० १।५) । भज सेवायाम् इति विपूर्वो वण्टने वर्तते—विभजन्ते दायं भ्रातरः । केवलोपि तमर्थमाह—अजाविकं सैकशफं न जातु विषमं भजेत् (मनु० ९।११९) । उपपूर्वो वसिरुपोषणेऽनशने वर्तते, उपवसति गृही पाप्मानं निर्णुदामीति । केवलोपि तत्रार्थे प्रयोगमवतरन्दृष्टः—अहोरात्रोषितो भूत्वा पौर्णमास्यां विशेषतः । पञ्चगव्यं पिबेत्प्रातर्ब्रह्मकूर्चविधिः स्मृतः ॥ शुचिः पुरोधास्त्र्यहोषितः स्नात इति च वराहमिहिरसंहितायाम् (४६।१५) । विलग्नशब्दः कृशापरपर्यायो दृष्टः, विविरहितोऽपि—तं प्रादेशमात्रं पृथुबुध्नं मध्ये लग्नं (महावीरं)

करोति (बौ० श्रौ० ६।३)। अयमेवास्यार्थ इत्यापस्तम्बतो विजानीमः—महावीरं करोति प्रादेशमात्रमूर्ध्वसानुमुपरिष्टादासेचनवन्तं मध्ये सन्नतं वायव्यप्रकारमिति। प्रसव इत्यभ्यनुज्ञानमाह, सवोपि—सवं देवस्य सवितुर्जुषाणाः (ऋ० ७।३८।४)। देवस्य सवितुः सवे कर्म कृण्वन्तु मानुषाः (अथर्व० ३।२३।३)। सृज विसर्गे इति विपूर्व उत्पूर्वो वा त्यागे वर्तते, विसृष्ट उत्सृष्टो वा वृषः। केवलोपि—सृष्टिर्मृष्टिद्विजाश्चाग्र्याः (मनु० ३।२५५)। सृष्टिरकार्पण्येनान्नादित्याग इति कुल्लूकभट्टः। यतिः प्रतियत्ने पठितः सम्पूर्वः स्पर्धायां वर्तते, देवाश्चासुराश्च संयत्ता आसन् इत्यत्र यथा। केवलोपि तत्रार्थे दृश्यते—वैश्वानरो यतते सूर्येण (ऋ० १।९८।१)। वैश्वानरः संयतते सूर्येणेति निरुक्तम्। संयतते संगच्छत इति च दुर्गः। इण् गतौ धातुरपशब्दसाहित्येनापायमाचष्टे—पथोऽपैति। अपमन्तरेणापि तमर्थं ब्रवीति—न सत्यादगा इति छान्दोग्योपनिषदि (४।४।५)। निर्यातनं विशोधनं भवति वैरस्य ऋणस्य वा। यातनं यातना वाप्युपसर्गवैधुर्य्येणापि तमर्थं मुक्तसंशयं ब्रूते। अहमस्य करोम्यद्य सदृशीं वैरयातनाम् (भा० शां० १३९।१८)। सन्नगानां सुघोराणां कृत्वा तां वैरयातनाम् (हरिवं० ३।५।८)। क्षत्रियं हत्वा गवां सहस्रं वैरयातनार्थम् (आप० ध० १।२४।१)। वैरं पापं तस्य यातनं निर्हरणमित्युज्ज्वलायां हरदत्तः। किरतिर्विक्षेपे पठितः। विपूर्वोऽवपूर्वो वा विक्षिप्तेनार्थेनाच्छादने परिवेष्टने वा वर्तते। रजोभिर्विकिरति अवकिरति वा वाटिकां वातः। केवलोऽपि तत्रार्थे दृष्टः—दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा इति शाकुन्तले। जटानां कीर्णया केशैः संहत्या परितः सितैरिति किराते(११।३)। वह प्रापणे इति धातुर्विपूर्व उत्पूर्वो वा परिणयने उपयमने वर्तते, केवलोपि—वधूरियं पतिमिच्छन्त्येति य ईं वहाते (ऋ० १०।८५।३७)। स्मृतिषु च बहुलम्—वहेत्कन्यां हृद्यां द्वादशवार्षिकीम्। षद्लृ विशरणादिषु धातुर्निपूर्व उपवेशने आसने वर्तते—निषीदति तरोर्मूलालवाले शिखी। निषेदुषीमासनबन्धधीर इति च। केवलोपि तमर्थमभिधत्ते—अग्ने देवाँ इहावह सादया योनिषु त्रिषु (ऋ० १।१२।३)। हन्तिरुत्पूर्व उत्क्षेपे प्रसिध्यति, केवलोपि तत्रार्थे दृष्टः—तुरगखुरहतस्तथा हि रेणुः (शाकुन्तले १।२७)। परिपूर्व आप्लृ व्याप्ताविति धातुः पर्याप्तौ पुष्कलायां वर्तते। केवलोपि—यजेत राजा क्रतुभिर्विविधैराप्तदक्षिणैः (भूरिदक्षिणैरित्यर्थः) (मनु० ७।७९)। संस्थाप्य धर्मान्मर्त्येषु यज्ञैरिष्ट्वाऽऽप्तदक्षिणैः (हरिवं० २।१०२।३१)। प्लुङ्गताविति धातुः। विपूर्वो विप्लवे विनाशे वर्तते। विप्लवतेऽकर्णधारा नौः। राज्यविप्लव इत्यादिषु यथा। विशब्दमन्तरेणापि स एवार्थ उदितो भवति—कथं स्वपिति घर्मान्ते बुध्यते चाम्बुदप्लवे (हरिवं० १।४६।५)। वेदप्लावी यवाश्यब्दं त्यक्त्वा च शरणागतम् (याज्ञ० ३।२८८)। आङ्पूर्वो रोहतिराक्रमणे वर्तते—आरोहति पर्वतम्। अन्तराप्याङम्—उत्तरामुत्तरां शाखां समालम्भं रोहेत् (श० ब्रा० ६।३।१६)। रोहति सप्त स्वर्गाल्ँलोकान् य एवं वेद (ऐ० ब्रा० ५।२।५)। अवगुण्ठित इति प्रायिकः प्रयोगः। गुण्ठित इत्यवविधुरोपि तेन समानार्थको दृष्टः—भस्मना

गुण्ठितः पादो येन मे मूर्ध्नि पातितः (हरिवं० २।१२१।३२)। हरतिरुपपूर्वः समर्पणे करादिदाने दृष्टः। बलीनुपहरन्ति प्रजाः प्रजेशाय। नानाप्युपशब्दं तत्रार्थेऽवतरन्दृष्टः—अथो त इन्द्रः केवलीर्विशो बलिहृतस्करत् (बलीनां प्रदात्रीः) (ऋ० १०।१७३।६)। हरन्त्यस्मै विशो बलिम् (तै० ब्रा० २।७।१८।३)। प्रपूर्वः करोतिः क्रियारम्भे वर्तते—वाचि शिक्षमाणस्य प्रथमवैयाकरणस्य सान्निध्यं किमपि चिकीर्षामीत्थि वाक्यमुक्तावलीं प्रकृतोऽस्मि। प्रशब्दात्पृथगपि केवलः करोतिस्तत्रार्थे दृष्टः—प्रभातां रजनीं दृष्ट्वा चक्रे शोभयितुं पुरीम् (रा० २।६।१०)। प्रपूर्वस्य सम्पूर्वस्य वा चरतेर्योऽर्थस्तं केवलोपि चरतिराचष्टे—प्रतिवादोपि ते देवि महाँल्लोके चरिष्यति (रा० २।३५।३०)। पत्लृ गताविति धातुरुत्पूर्व उड्डयने प्रसिद्धः, विनाप्युदं तमर्थमाह—अग्निः पक्षी भवति। न ह्यपक्षः पतितुमर्हति (तै० सं० ५।२।५।१)। अपि शक्या गतिर्ज्ञातुं पततां खे पतत्त्रिणाम् इति कौटलीयेऽर्थशास्त्रे (२।६।२७)। पतन्निति पक्षिपर्यायः—पतत्त्रिपत्त्रिपतगपतत्पत्त्ररथाण्डजा इत्यमरः। यातव्याय प्रहिणुयाद् दूतम् इति कामन्दके (१२।१) यातव्यशब्दोऽभियातव्यशब्देन समानाभिधेयः। प्रपूर्व इष् गतौ ण्यन्तः विसर्जने प्रस्थापने वर्तते, प्रेषयति दूतं नृपः। केवलोपि तत्रैवार्थे प्रयोगमवतरति—देवाः कपोत इषितो यदिच्छन्दूतो निर्ऋत्या इदमाजगाम (ऋ० १०।१६५।१)। पद्यतिर्विपूर्वोऽवपूर्वो वा मरणे दृष्टः, केवलोपि—भरन्नग्निं पुरीषं मा पाद्यायुषः पुरा (वा० सं० ११।४६)। सो अग्नेरन्ते वृषलः पपाद (ऋ० १०।३४।११)। महान्वत नो वीरोऽपादि इति च शतपथे (१४।१।१।१०)। अवपूर्वः पतने वर्तते—ये गर्भा अवपद्यन्ते (अथर्व० ५।१७।७)। अत्रा कर्तमवपदात्यप्रभुः (ऋ० ६।७३।६)। केवलोपि—यदा वै पशोर्दन्ताः पद्यन्ते (पेदिरे अपत्सत) इति (ऐ० ब्रा० ७।१४)। उत्पूर्वो नयतिरुन्नयने उद्धरणे वर्तते, केवलोपि—यथा नयत्यसृक्पातैर्मृगस्य मृगयुः पदम्। नयेत्तथानुमानेन इति भृगुप्रोक्तायां मनुसंहितायाम् (८।४४)। नारदीयमनुसंहितायामपि स्मर्यते—यथा मृगस्य विद्धस्य मृगव्याधः पदं नयेत्। कक्षे शोणितलेशेन तथा धर्मपदं नयेत्। (१।३२)। नवनीतं नवोद्धृत्तम् इत्यमरः। परिपूर्वो नमिः परिवृत्तौ वर्तते। केवलोपि—ऋकाररकारषकारा नकारं समानपदेऽवगृह्ये नमन्ति (=नमयन्ति) इत्यृक्प्रातिशाख्ये (५।२०)। नमयन्ति दन्त्यं मूर्धन्यं कुर्वन्तीति नामिन इत्यृक्प्रातिशाख्ये उवटः (१।१७)। उत्पूर्व ईरयतिरुच्चारणे वर्तते, उदीरितोऽर्थः पशुनापि गृह्यत इत्यत्र यथा। विनाप्युदं तदर्थको दृष्टः—निबोध चेमां गिरमीरितां मया (सावि० ५।२३)। इतीरयन्तीव यथा निरैक्षि (नैषध० १४।२१)। ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा॥ प्रपूर्वकः स्थापयतिर्विसर्जने प्रेरणे वर्तते प्रस्थापयति दूतं नृपः। केवलोपि—अभिराममहं रामं स्थापयिष्यामि दण्डकान् (रा० २।१३।१०)। प्रतिपूर्वो हन्तिः प्रतिरोधे वर्तते प्रतिहन्यतेऽस्य दुर्मेधसो गतिर्व्याकरणे। केवलोपि—यदचिन्त्यं तु तद् दैवं भूतेष्वपि न हन्यते

(रा० २।२०।२०)। दंशयतिः सम्पूर्वः प्रायेण बन्धने वर्तते सन्दंशः, सन्दष्टजिह्व इत्यत्र यथा। विनाप्युपसर्गं समं तत्रार्थे दृष्टः—दंशितो व्यूढकङ्कट इत्यमरः। दंशितो बद्धकवच इत्यर्थः। भिदिर् विदारणे पठितः सम्पूर्वः संयोजने वर्तते—गङ्गायमुनयोः सम्भेदः। केवलोपि तत्रार्थे दृश्यते—अङ्गुष्ठनखांशुभिन्नया······ अच्छस्फटिकाक्षमालयेति माघे (१।६)। भिन्नेषु रत्नकिरणेष्विवेन्दोः (४।४६) इति च। पुष्पोच्चयः पल्लवभङ्गभिन्न इति च कुमारे(३।६१)। प्रपूर्वो युजिर्व्यवहारे रूढः, प्रयुङ्क्ते शब्दान्। केवलोपि—प्रशस्ते कर्मणि यथा सच्छब्दः पार्थ युज्यते (=व्यवह्रियते) इति गीतासु (१७।२६)। दो अवखण्डने इति सम्पूर्वो बन्धने दृष्टः, सन्दितचरण इत्यत्र यथा। अन्तरेणापीममुपसर्गं बन्धनमर्थमाह निरवग्रहम्—दामेति दोहनकाले पशुबन्धनरज्ज्वां वर्तते। दीयते बध्यतेऽनयेति व्युत्पत्तेः। धाताब्जयोनिर्द्रुहिण इत्यमरे धातेति विधातारमाह। वेरर्थो धातुनैवोक्तः, उपसर्गाणां द्योतकत्वाद् इत्यमरोद्घाटने स्वामी। प्रतिपूर्वः शृणोतिः प्रतिज्ञाने वर्तते। विप्राय गां प्रतिशृणोति। केवलोपि तत्रार्थे दृष्टः—तदवश्यं त्वया कार्यं तदनेन श्रुतं मम (रा० २।१८।२१)। ओविजी भयचलनयोरिति तुदादिषु पठितः। प्रायेणायमुत्पूर्वकः। सम्मानाद् ब्राह्मणो नित्यमुद्विजेत विषादिव (मनु० २।१६२)। परं विनाप्युदं प्रयुज्यते—आयुधेभ्यो विजमानः पराङेवैति (ऐ० ब्र० ७।१५)। काश्चित्सवत्सा गावः पतिताः शीकरवेजिताः (हरिवं० ३६१५)। शिल्पकार्य उभयेन वेजिताः (रघु० १६।३५)।

अलं पल्लवितेन। एतावता प्रसिद्धिं गतानेकार्थता धातूनां तदनुषक्ता च द्योतकतोपसर्गाणाम्। अनेकार्थेषु धातुष्वेकस्य कस्यचिदर्थस्य तात्पर्यग्राहकत्वमेव द्योतकत्वमिति तद्विदः। तेन तत्रैवोपसर्गाणां द्योतकत्वमुपेयतां कामम्। न वयं विरुन्ध्मः। न च सर्वे धातवोऽनेकार्था इत्यकामेनापि वाचकतोपसर्गाणामभ्युपेया। न वयं प्रयोगेष्वनेकार्थतामुपलभामहे। ब्रूञ् व्यक्तायां वाचि, मन्त्रि गुप्तपरिभाषणे, मृङ् प्राणपरित्यागे, मन ज्ञाने, मनु अवबोधने, चुर स्तेये, डुक्रीञ् द्रव्यविनिमये, मुष स्तेये, बन्ध बन्धने, हिंसि हिंसायाम्, मन्थ विलोडने, अश भोजने, पा पाने, पुष् पुष्टौ, ज्ञा अवबोधने, तुद व्यथने इत्यादयः शतशो धातवः केवला उपसर्गैरसम्पृक्ता न जात्वनेकार्थका दृष्टाः। यच्च भगवन्तो भाष्यकारा आहुः—तिष्ठतिरेव व्रजिक्रियामाह तिष्ठतिरेव च व्रजिक्रियाया निवृत्तिम् इति। तत्रोच्यते इदं नाम सर्वे सर्वार्थवाचका इतिवत्प्रत्यग्दृशां तेषां भगवतां प्रत्यक्षं स्यान्नास्मादृशामर्वाग्दृशाम्। वयं तु प्रयोगेषु क्वचनापि केवलं तिष्ठतिं गत्यर्थमाचक्षाणं नेक्षामहे।

यद्युच्येत अब्राह्मण एष यस्तिष्ठन् मूत्रयतीत्यत्र तिष्ठतिर्गतिमाचष्ट इति तदसत्। ऊर्ध्वस्थितिरेव विवक्ष्यते न स्थानान्तरसंक्रमः तद्रूपा च गतिर्गतिनिवृत्ता-

विति धात्वर्थेऽभिसंहिता । अन्यथा तिष्ठन्ति पर्वता इत्यत्रापि गतिः प्रतीयेत ।

क्वचित्केवला धातव उपसर्गसहकारमन्तरेणापि कमपि विशिष्टमर्थमर्पयन्तो लक्ष्यन्ते । तदप्यनेकार्थतायां हेतुर्नेति समनन्तरं वेदयामः । केवलोपि पततिरुड्डयने वर्तते—अपि शक्या गतिर्ज्ञातुं पततां खे पतत्त्रिणाम् (कौ० अर्थ० २।९।२७) । उत्पूर्वोऽपि । पत्लृ गताविति धातुः । पतनं गमनं कदाचिदूर्ध्वं भवति कदाचिदधः । उदमनपेक्ष्य वाक्यार्थवशाद्यदि पतनेनोर्ध्वपतनं गम्येत, किं तत्रापूर्वमुच्येत । किं वा तावता धातोरनेकार्थता घटेत । एवं हरतिरुपेन विनाभूयापि यदि क्वचिद् अहरहर् भूतेभ्यो बलिं हरेत् (श० ब्रा० ११।५।६।२), सानुगेभ्यो बलिं हरेत् (मनु० ३।८७) । इत्यत्र यथा वाक्यार्थतात्पर्यग्रहेणोपहरणमुपनयनं वा ब्रूयान्नहि तावताऽने-कार्थतां यायात्, यावन्न स्वाभिधेयं प्रापणमर्थं जह्यात् ।

यच्च काशिकायां वेः पादविहरणे इति सूत्रे धात्वर्थनिर्देशाद् धातूनामनेकार्थ-कत्वमुन्नीतं तदपि दुरुन्नयम् । न हि पादविहरणं पादविक्षेपमात्रं भवति, किन्तु अश्वादीनां गतिविशेषो विक्रमणम् । तस्यार्थस्य विपूर्वे क्रमौ दर्शनात्केवले चादर्शना-दन्वयव्यतिरेकाभ्यां यदत्र गतौ वैशिष्ट्यं तदुपसर्गस्यैव वाच्यं न धात्वर्थः ।

एवमनेकार्थतायां धातूनां विघटितायां सोपसर्गकाणां चानेकार्थतायामुपलभ्य-मानायामुपसर्गाणां वाचकताऽर्थादापद्यते । सेयं वाचकता नास्माभिरुपज्ञायते । पूर्वेऽपीमां शब्दतोऽर्थतश्च प्रतिपेदिरे । आह भगवान् यास्काचार्यः–उच्चावचाः पदार्था भवन्तीति गार्ग्यः । तद्य एषु पदार्थः प्राहुरिमे तं नामाख्यातयोरर्थविकरणम् इति । उपसर्गो विशेषकृदिति ऋक्प्रातिशाख्यकारः शौनको भगवान्भाष्यकारश्च। अधिरुपरि वर्तते इति च भूवादयो धातव इति सूत्रे भाष्यमपि कण्ठरवेणोपसर्गा-णामर्थवत्तामूरीकुरुते ।

धातूपसर्गयोर्नैकविधः सम्बन्धः । क्वचिद् विशेषणविशेष्यभावः । क्वचिच्च बाध्यबाधकभावः । केवलस्योपसर्गस्य वाक्ये स्वातन्त्र्येण प्रयोगो नेति न तावता तस्य वाचकता विहन्यते । यथा प्रत्ययस्य कर्मादिकारकसङ्ख्याकालादीनां वाच-कत्वेपि पृथग् प्रयोगो नास्ति प्रप्ययो वाचकत्वेपि केवलो न प्रयुज्यत इति हर्युक्तेः, प्रत्ययस्य प्रकृत्यर्थान्वितस्वार्थाभिधायित्वनियमाच्च, तथैवोपसर्गा अनिर्बद्धास्तं तमर्थं मास्म वोचन्, धातुतः प्राक् प्रयुक्तास्ते ब्रुवीरन्नित्यभ्युपगमः कुतो न स्यात् ? तेन प्रादीनां वाचकत्वे भूयान्प्रकर्षः कीदृशो निश्चय इतिवद्, भूयान्प्रः, कीदृशो निरित्यपि स्यादिति चोद्यमचोद्यम् ।

स न मन्येतोपसर्गाणां वाचकत्वे अनु भू इत्यादौ भवतेः क्रियावाचित्वाभावाद् धातुत्वं न स्यात्, अकर्मकत्वाच्च कर्मणि लकारो न स्यादिति । न वयं ब्रूम उप-

सर्गाः क्रियाया वाचका इति, किन्तर्हि विशेषस्य धातुवाच्याया क्रियायामाधेयस्य वाचकाः, तेनैव च विशेषेण सकर्मकत्वापादका इति सुतरामुपपद्यते कर्मणि लकारोत्पत्तिः। भवतेश्च सत्तैकार्थत्वात्किन्नामोपसर्गेणानुना द्योत्येत। अनुः प्रायेण व्याप्तिमाह व्याप्य विषयान् इन्द्रियाणां भवनमेवानुभव इत्यनुः सार्थकः।

भू सत्तायाम् इति सत्तायां पठितो भवतिनर्थान्तरे क्वचिद् दृष्टः। अनु-पूर्वश्चेदयं लक्षणयाऽनुभवार्थमाचक्षीत, अनुनोपसर्गेण तत्र किं क्रियते ? अनेकार्थ-तायां सत्यामेव तात्पर्यग्राहकतोपपत्तिरुपसर्गाणाम्, सैव च द्योतकतेति सम्प्रति-पन्नोऽर्थः।

धात्वर्थं बाधते कश्चिदित्युक्तमधस्तात्। बाधो नाम धात्वन्तर्हितस्यार्थस्योद्-भावनं द्योतनं वेति न शक्यमास्थातुम्। विरोधात्। यद्युपसर्गाणां स्वकः कश्चिदर्थो न स्यात्तदा केन सामर्थ्येन तं सर्वत्र प्रसिध्यन्तं धात्वर्थं बाधेरन्। मितेन सन्दर्भेणा-यमर्थबाधो निबध्यते—

श्रमु तपसि खेदे चेति पठितो धातुः। विपूर्वस्तु खेदाभावे कार्यविरामजनिते क्लमविनोदे वर्तते। अव्यवहितायां भूमौ विश्राम्यति सुखं श्रमी। तिष्ठतिर्गति-निवृत्तौ पठितः प्रपूर्वस्तु प्रयाणे गमनोपक्रमे दृश्यते—प्रतिष्ठते चैत्रः स्वगृहानिति। सम्पूर्वोऽयं परिसमाप्तौ मरणे च प्रयुज्यते। सन्तिष्ठते यज्ञः। नियतमायुः प्राणिनामिति न कश्चिदकाले सन्तिष्ठते। सोऽयमर्थबाधः। प्रयाणस्य परिसमाप्तेर्म-रणस्य च स्थितिविरोधात्। ईक्षतिर्दर्शने पठितः, उपपूर्वस्तु अदर्शने दर्शनिपरहारे वा वर्तते–तदल्पमपि नोपेक्ष्यं दुष्टं काव्ये कदाचनेति काव्यादर्शे। भिदिर् विदारणे दो अवखण्डने, दंश दशने, दान खण्डने इत्येवं पठिता भिदिद्यतिदशतिदान-यतयः समुपसृष्टाः संयोजने संगमने वर्तन्ते। अयमप्यर्थबाधः। सम्भेदो गङ्गाय-मुनयोः। हर्षोद्वेगसम्भेदः। सम्भिन्नसर्वाङ्गः कूर्मः (संहृतसर्वावयव इत्यर्थः)। सम्भिन्नबुद्धिः सम्मिश्रितबुद्धिर्नास्तिक इति यावत्। सं परमान्त्समवमानथो संद्यामि मध्यमान् इत्यथर्वसंहितायाम् (६।१०३।२)। शृङ्खलासन्दितचरणः। सन्दंशः। सन्दष्टजिह्वः। सन्दष्टवस्त्रेष्वबलानितम्बेष्विति रघौ (१६।६५)। शृङ्खलासन्दा-निताङ्घ्रिः। सन्दानिनी (गोष्ठमित्यर्थः) इति क्रमेणोदाहरणानि। रमिः क्रीडायां पठितः, व्युपसृष्टस्तु क्रियामात्रनिवृत्तौ प्रयुज्यते–विरमति क्रीडाया इति। उप-पूर्वोऽयं निधनेपि वर्तते। निधनं सर्वचेष्टाभावपर्यायः। उपरतो महात्मेति तमशोच्य-मपि शोचन्त्यर्थार्थिनो लोकाः। अस्यतिः क्षेपणे पठितः। निपूर्वस्तु निक्षेपे निधाने वर्तते। स्मरतिश्चिन्तायां पठितः प्रपूर्वो विपूर्वश्च तद्विपर्यये दृष्टः। प्रस्मरतिर्विस्मरणार्थ इति काव्यालङ्कारसूत्रवृत्तौ वामनः। लषतिरिच्छायां पठितः। अपपूर्वस्तु अनिच्छायाम्–प्रलापिनो भविष्यन्ति कदा न्वेतेऽपलाषिण इति भट्टौ

(७।१२)। तत्रापलषिणोऽपलषणशीला व्यपगतकामा इति जयमङ्गला। एवं काक्षिरित्यपीच्छायां पठितः, विपूर्वस्तु तद्विपर्यये प्रसिध्यति–न मे विकाङ्क्षा जायेत त्यक्तुं त्वां पापनिश्चयाम् इति श्रीरामायणे (२।७३।१८)। अन्यत्रापि विशब्दो बाधमाह—तद्यथा कथं न तद् विजानीयां किमु भाति विभाति वेति कठोपनिषदि (५।१४)। अत्र विभाति न भातीत्यनेन समानार्थकम्। निर्ज्ञातार्थस्य समाप्तिर्वा भवति विसमाप्तिर्वेति (५।३।६७) सूत्रे भाष्ये। अत्र नञर्थो विशब्द इति कैयटः।

अयं चापरश्चित्रीयाकरोऽर्थबाधः—अवपालितावकर्णिताऽवज्ञातावगणितेष्व-वोऽर्थविपर्यये। तथा ह्यवपालितोऽपालितो भवत्यवकर्णितोऽनाकर्णित ईषदाकर्णितो वा। एवमवज्ञातावगणितावनादृतौ भवतः। इहापि स्पष्टमेवावोऽर्थविपर्यासकृत्। यो नाम न ज्ञायते न संस्तूयते न गण्यते कोऽसौ कतमोऽसाविति स आत्मानमव-हेलितम्मन्यते।

वस्तुत उपसर्गश्च धातुश्चेति द्वयमपि सम्भूय धातुरेव। धातुना क्रोडीकृत उपसर्गस्तदवयव एवेति परमार्थः। उक्तं च वाक्यपदीये—

अडादीनां व्यवस्थार्थं पृथक्त्वेन प्रकल्पनम्।
धातूपसर्गयोः शास्त्रे धातुरेव स तादृशः॥ (२।१८२) इति।

अड्द्विर्वचनव्यवस्थार्थं केवलं धातवः पृथगुपदिष्टाः, वस्तुतः पुनर्विशिष्ट-क्रियावचना एव त इति सोपसर्गाणामेव धातुत्वम्।

तथा हि सङ्ग्रामयतेः सोपसर्गाद् विधिः स्मृतः।
क्रियाविशेषाः सङ्घातैः प्रक्रम्यन्ते तथाविधाः॥

असंग्रामयत, सिसङ्ग्रामयिषते सोपसर्गस्यैवाड्द्विर्वचनदर्शनात् सोपसर्गस्यै-वास्य धातुत्वम्। अत एवोपक्रम एवाख्याते सङ्घातैर्धातूपसर्गसमुदायैर्विशिष्टैव क्रियाऽभिधीयते।

कुत एतदित्यत्र हेतुमाह—

कार्याणामन्तरङ्गत्वमेवं धातूपसर्गयोः।
साधनैर्याति सम्बन्धं तथाभूतैव सा क्रिया॥

उपसर्गसम्बन्धाधीना स्वार्थव्यवस्था धातूनाम्। स्वार्थसम्बन्धे च निर्वृत्ते सम्बन्ध्यन्तरेण संनिधातव्यम्। यथा करोतेरुपसर्गेण योगे निष्पन्ने सुडादय आ-सज्यन्ते। आह च सूत्रकारः—सम्परिभ्यां करोतौ भूषणे। उपाच्च प्रतियत्नवैकृत-वाक्याध्याहारेषु चेत्यादि। धातूपसर्गसमुदायवाच्यैव सा विशिष्टा क्रिया साध्या

सती साधनैः कारकैः सम्बन्धं याति । धातूपसर्गयोः कार्यमन्तरङ्गम्, तस्मिन् सति बाह्यैः साधनैः कर्तृकर्मादिभिः सम्बध्यते धातुरिति च युक्तम् । उक्तं च भाष्ये पूर्वं धातुरुपसर्गेण युज्यत इति ।

अस्मिन्पक्षे अनुभूयत इत्यत्र कर्मणि लकारः सिध्यति । तथा षत्वतुकोरसिद्ध इत्यारम्भणीयं भवति । धातूपसर्गयोः कार्याणामन्तरङ्गत्वे हि अधीत्येत्यत्र दीर्घत्वे तदसिद्धत्वे च तुकः सम्भवो नेतरथेतीष्ट एव पक्षो भगवतः पाणिनेः । तथा चाडभ्यासव्यवायेऽपीति वार्तिकं नारम्भणीयं भवति । अडुत्पत्तेर्लकारोत्पत्त्युत्तरकालभावित्वेन ततः प्रागेव धातूपसर्गयोः सम्बन्धे षत्वसिद्धे ।

ननु पूर्वं धातुः साधनेन युज्यते तत उपसर्गेणेत्यपि पक्षो भाष्ये स्थितः । हरिणा च—

**प्रयोगार्हेषु सिद्धः सन् भेत्तव्योऽर्थो विशिष्यते ।**
**प्राक् च साधनसम्बन्धात् क्रिया नैवोपजायते ॥**

इति कारिकायां समर्थितः । इदमुक्तं भवति—लब्धात्मा क्रिया विशेष्यभावमुपगन्तुमर्हति । प्रयोगार्हेषु धातुषु सिद्धः स क्रियार्थ उपसर्गादिभिर्भेत्तव्यो विशेष्यो भवति । साधनसम्बन्धात् पूर्वं क्रियाऽनिर्वृत्ता निरात्मिका सती द्योतकेनोपसर्गेण सह विशेषणविशेष्यसम्बन्धं नोत्सहते प्रतिपत्तुम् । एवं हि भाष्यकार आह—साधनं क्रियां निर्वर्तयति तामुपसर्गो विशिनष्टीति ।

अस्मिन् पक्षे अडभ्यासव्यवायेपीत्यारम्भणीयम् । षत्वतुकोरसिद्ध इति च तुकि कर्त्तव्य एकादेशासिद्धत्वं नव क्तव्यं भवति । प्रतिपूर्वादिणोऽचि प्रत्ययेऽन्तरङ्गत्वात्साधनाभिधायकार्धधातुकाश्रयो गुणः प्रवर्तत इति गुणेऽयादेशे च सवर्णदीर्घप्राप्त्या यणः प्राप्त्या च प्रत्ययशब्दसिद्धिर्भवति । णेरध्ययने वृत्तम्, अध्ययनतोऽविप्रकृष्टाख्यायाम् इत्यादिषु अध्ययनशब्दं प्रयुञ्जानस्य भगवतः सूत्रकारस्याप्यभीष्ट एष पक्ष इति न दुरुन्नयम् । अत्रापि पूर्ववत् पूर्वं साधनयोगे गुणादिप्रक्रिययाऽध्ययनशब्दनिष्पत्तिः सम्भविनी नान्यथेति प्रव्यक्तम् ।

एवं स्थिते पूर्वं धातुरुपसर्गेण युज्यत इत्यस्य का गतिरित्यत्रोच्यते—

**धातोः साधनयोगस्य भाविनः प्रक्रमाद्यथा ।**
**धातुत्वं कर्मभावश्च तथान्यदपि दृश्यताम् ॥**

क्रियावचनो धातुरित्युक्तम् । साधनसम्बन्धाच्च प्राक् क्रियानिर्वृत्तेरसम्भवाद् यथा धातोः कर्मणः समानकर्तृकाद् इच्छायां वेत्यत्र भाविसाधनसम्बन्धसमाश्रयणेनोपक्रम एव धातुसंज्ञा क्रियते, कर्म यो धातुरितीषिकर्मत्वस्य भावित्वाद्

उपक्रम एवेषिकर्मत्वमुक्तं तथाऽन्यदपि भाविसाधनसम्बन्धादुपक्रम एव विशिष्ट-क्रियावचनत्वं दृश्यताम् । को दोष इति पुण्यराजः ।

उपक्रम एवासौ क्रियाविशिष्टैवाभ्युपगन्तुं युक्तेति दृष्टान्तप्रदर्शनपूर्वमाह—

**वीजकाले तु सम्बद्धा यथा लाक्षारसादयः ।**
**वर्णादिविपरिणामेन फलानामुपकुर्वते ।। (२।१८५)**
**बुद्धिस्थादभिसम्बन्धात्तथा धातूपसर्गयोः ।**
**अभ्यन्तरीकृतो भेदः पदकाले प्रकाशते ।। (२।१८५)**

लाक्षारसादिवद् धातूपसर्गयोर्बु द्धिस्थादभिसम्बन्धाद् न तु वस्तुतः धातूपसर्गसमुदायस्य वस्तुतो धातुत्वेन, धातूपसर्गविभागस्याडादिकार्यार्थं कल्पितत्वेन वाह्यस्य तयोरभिसम्वन्धस्यासंभवे बौद्धस्यैव तस्य संभवात् । अन्तर्लीनोऽव्यक्तं प्रतीयमानः क्रियाविशेषः साधनसम्बन्धोत्तरं पदनिष्पत्तिकाले प्रकाशते ।

एवमन्वादीनां वाचकत्वे शिष्टस्य भ्वादेरक्रियावचनत्वप्रसङ्गः कर्मलकारानुपपत्तिप्रसङ्गश्चेत्यादि चोद्यस्यानवतरः । धातूपसर्गसमुदायस्य वाचकत्वेपि क्रियावाचित्वं धात्वंशनिष्ठम् । विशेषवाचकत्वं चोपसर्गगतम् उभयस्य विशिष्ट-क्रियावाचित्वमित्यभ्युपगम एवोत्तरः पक्षः ।

आतश्च धातूपसर्गसमुदायस्य धातुत्वम् । केचन धातव उपसर्गविशेषमन्तरेण न प्रयोगमवतरन्ति । इङ् अध्ययने इति धातुर्न जातु व्यभिचरत्यधिमुपसर्गम् । आङः शसि इच्छायाम् आङः शासु इच्छायामिति सङ्ग्राम युद्धे इति तु सोपसर्गाविव पठिताविति व्यभिचारशङ्कैव नोदेति । एवंन्यासः सत्युपसर्गयोगे समुदायस्यैव धातुत्वमिति मुक्तसंशयं व्यवसाययति ।

किञ्च । येपि नाम धातवो निरुपसर्गास्तेषां केचनोपसर्ग-विशेषमन्तरेण न प्रयोगमवतरन्ति— चायृ पूजानिशामनयोरिति चायतिरर्थद्वये पठितः । न च केवल एकतरस्मिन्नप्यर्थे वर्तते । अपोपसृष्ट एवायं पूजामाह । अपचाय्यः पूज्यो भवति न तु चाय्यः । केवलेन तदर्थस्याप्रतीतेः । निचाय्य एव च निशाम्यो द्रष्टव्यो भवति न केवलश्चाय्यः । स्वच्छन्दवाच ऋषयोपि निचाय्यं तं मृत्युमुखात् प्रमुच्यत इत्येवं प्रयुयुजिरे । अयमत्र निर्गलितोऽर्थः—पूजानिशामनयोः पठितोऽपि चायतिरशक्तोऽनुपसृष्टः पूजानिशामने अभिधातुम् । तत्रापि प्रत्यर्थमुपसर्गविशेषमपेक्षते ।

इदमत्र तत्त्वम्—यथानुबन्धा एकान्ता अनेकान्ताश्चेति पक्षद्वयं यथा

वाऽनुकरणशब्दाः सार्थका अनर्थकाश्चेत्युभयमप्यास्थीयते तथैवोपसर्गा वाचका द्योतकाश्चेति यथालक्ष्यमुभयः कृतान्त इति स्थितम्।

उपसर्गव्यापारं निरूपयद्भिर्वाचि विचक्षणैरभियुक्तैर्यदभ्युक्तं—'कश्चित्तमनुवर्तत इति तत्र कोऽभिसन्धिस्तेषाम्। न ह्यनुवर्तनं नाम कयापि युक्त्या वाचकत्वं भवति न च द्योतकत्वम्। विशेषानभिधानात्। अत्र पक्षेऽनर्थका एवोपसर्गा अनर्थान्तराभिधायिनः। न हि ते धात्वर्थस्य किमप्युपस्कुर्वते। शब्दोपजन एव भवति नार्थोपजनः।

अनर्थकत्वं चामीषां केषाञ्चिदाचार्योऽपि कण्ठरवेणाभ्युपैति यदधिपरी अनर्थकाविति सूत्रयति। अनुवृत्तेस्तावत् कतिचिदुदाहरणानि स्थूलोच्चये नोच्यन्ते—अर्थयतिरुपयाच्ञायां पठ्यते, प्रपूर्वोऽपि तमेवार्थमभिधत्ते, सम्प्रपूर्वोपि—उपाध्यायमर्थयते प्रार्थयते सम्प्रार्थयते क्षितीश इति। द्विष अप्रीताविति धातुरपपूर्वकोऽपि तदर्थक एव—स मामपद्विष्टे, अहं च न जातु तं द्विषे। यमर्थं शृणोतिराह तमेव संश्रृणोतिरपि। एवं विशतिः प्रविशतिना समानार्थः। क्रदि आह्वाने रोदने च पठितः। केवलोप्याह्वाने वर्तते—क्रन्दत्यविरतं सोथ भ्रातृमातृसुतानथ इति मार्कण्डेयपुराणे (१०।६०)। आङ्पूर्वोपि—आपन्न आक्रन्दत्यभ्युपपत्तारम्। णिजिर् शौचपोषणयोः केवलोपि शौचं शोधनं प्रक्षालनमाह, निःपूर्वोपि—अप्सु निक्त्वा तण्डुलान् (कौशिकसूत्रे ५१)। अश्वो न निक्तो नदीषु (ऋ० ८।२।२)। निःपूर्वस्तु प्रसिद्धयतितरां प्रयोगेषु। केवलः षद्लृ विशरणगत्यवसादनेषु इति धातुरवसादे वर्तते, अवोपसृष्टोपि—प्रतायन्तां वाचो निमितविविधार्थामृतरसा न सादः कर्तव्यः कविभिरनघे स्वविषये इति ध्वन्यालोके (४।१७) तथा दर्शनात्। पृची सम्पर्के इति धातुः प्रायेण समुपसृष्टः प्रयोगमवतरति। धात्वर्थनिर्देशेऽपि समुपात्तः। अन्तरेणापि समं तमेवार्थमाह—तमित्पृणक्षि शवसोत राया (ऋ० ६।१५।११) इत्यत्र यथा। कत्थ श्लाघायामिति धातुपाठः। इक्ष्वाकूणां विशेषेण बाहुवीर्ये न कत्थनम् (भा० ३।६६।४८)। गर्जितेन वृथा किं ते कत्थितेन च (भा० १।५६६५)। विपूर्वोऽपि तमेवार्थमभिधत्ते—नात्मना विकत्थते।

चायृ पूजानिशामनयोरिति प्रायेणोपसृष्ट एव प्रयोगेषु दृष्टः, क्वचित् केवलोपि—अथेन्द्रो चायन्मनुं श्रद्धादेवम् (काठक० ३०।१)।

प्रयुञ्जते शिष्टा अन्यत्र नामभिः सहचरितताननर्थकान्प्रादीन्—सुमेरुः, प्रतीरम्, प्रदीपः, प्रलम्बः, प्राग्रम्, विस्फुलिङ्गः, विलोचनम् इत्यादिषु।

**स वाचको विशेषाणां सम्भवाद् द्योतकोऽपि वा।**
**शक्त्याधानाय धातोर्वा सहकारी प्रयुज्यते॥ (२।१८८)॥**

इत्यत्र कारिकायामुपसर्गाणां केषाञ्चिच्छक्त्याधानलक्षणं सहकारित्वमुक्तं हरिणा। शक्तिमात्रमुपसर्गः कुरुत इत्यर्थाभिधाने सहकारिण उपसर्गा इत्येवं व्याख्यातं च पुण्यराजेन। कश्चित्तमनुवर्तत इत्यस्यैवायमनुवाद इत्युक्तं भवतीति च व्याहृतं तेन। वाचकत्वद्योतकत्व-व्यतिरिक्त एष पक्ष इति कारिकायाः प्रकृतायाः स्वरसः। इदं नो बुद्धि नोपारोहति यो नामोपसर्ग आत्मनाऽनर्थकः स केन सामर्थ्येन धातावर्थाभिधाने शक्तिमादधीत। प्रागेव चासौ धातुश्शक्तः स्वार्थाभिधाने, इति तस्य शक्त्यपह्नवः कथमाञ्जस्यमश्नुवीत ? तेन लक्ष्यानुरोधात् केचिदनर्थका इत्यपि नापलाप्यं भवन्ति : कथं वात्र सूरयः पश्यन्ति ?

---

# वेदे धातूपसर्गयोगः

तत्तदर्थविवक्षया प्रणुन्ना ऋषयस्तत्तदर्थवचनान्धातूनप्रयुज्योपसर्गसहकारेण तं तमर्थमाहुरित्यमीषां शीलम्। तथाहि वैदिकाः पिङ्गलादयो महर्षयश्छन्दोजातीनां तास्ताः संज्ञाश्चिकीर्षन्तो धातुं साधारणीकृत्योपसर्गविशेषैर्विशेषं विवक्षन्ति। तद्यथा—कृतिः प्रकृतिराकृतिर्विकृतिरुत्कृतिरिति च्छन्दोजातय इति प्रतिजानते। एवं स्थिते वेदे यदुपसर्गप्राचुर्यं व्यवहारवशगमक्षिलक्षीभवति न तदन्यत्र। शब्दतोऽर्थतश्च चित्रीयाकर एष धातूपसर्गयोग इति तमुपपरीक्षामहे।

अञ्जते व्यञ्जते समञ्जते क्रतुं रिहन्ति मधुनाऽभ्यञ्जते (अथर्व० १८।३।१८) अत्र मन्त्रेऽञ्जिरेको धातुः, उपसर्गश्चानेकः। अञ्जेनन यजमानस्याक्ष्णो रञ्जनमुच्यते, तदेव विना विशेष्यते। इदं हि दिव्यं कर्म मानुषाद् भिद्यते। यजमानस्य पूर्वं दक्षिणमक्ष्यञ्जन्त्यृत्विजः, मनुष्यास्तु पूर्वं सव्यमञ्जन्ति। अभ्यञ्जनेन तु शारीरोऽभ्यङ्ग उच्यत इत्येवमुपसर्गभिदा सूपपन्ना भवति।

राद्धिः प्राप्तिः समाप्तिर्व्याप्तिर्मह एधतुः। अत्याप्तिरुच्छिष्टे भूतिराहिता निहिता हिता (अथर्व० ११।७।२२)॥ अत्रापि आप्लृ व्याप्ताविति धातौ तत्तदुपसर्गासङ्गो धात्वर्थविशेषणतया सार्थकः। समाप्तिः सम्यगाप्तिर्भवति, व्याप्तिश्च विविधा प्राप्तिः, अत्याप्तिश्चातिक्रान्ताऽऽप्तिरिति विशदम्। एवं डुधाञाऽऽङाद्युपसर्गयोगोप्यर्थान्तरकृदिति बहु विज्ञाप्यं भवति। आभिमुख्येन स्थापिता भूतिः समृद्धिराहिता भवति, निक्षिप्ता च सैव निहिता भवति।

उपमितां प्रतिमितामथो परिमितामुत। शालाया विश्ववाराया नद्धानि विचृतामसि (अथर्व० ९।३।१)॥ अत्र डुमिञ् प्रक्षेप इति धातोरुपादिभिरुपसर्गैः सहचारोर्थविशेषाय भवति। सोऽर्थविशेषो दुरवधारो नाम। उपमिताऽवलम्बिता, प्रतिमिताऽवष्टब्धा, परिमिता चाभिसंहिता भवतीति केषाञ्चिदभ्यूहः।

विजावति प्रजावति वि तेपाशांश्चृतामसि (अथर्व० ९।३।१३)। अत्र विजाशब्देन विजननं गर्भमोचनमुच्यते, प्रजाशब्देन च प्रसूतिर्जातमपत्यम्।

परा च यन्ति पुनरा च यन्ति भद्रा नाम वहमाना उषासः (ऋ० १।१२३।१२)। अत्र परापूर्वं इण् गताविति धातुर्निवृत्तौ वर्तते, आङ्पूर्वस्तु स एवावृत्तावाभिमुख्येनागमने। यातेरप्येतदुपसर्गद्वये तादृश एवार्थः—परा यात पितर आ च यात (अथर्व० १८।३।१४)।

वि मे पुरुत्रा पतयन्ति कामाः (ऋ० ३।५५।३)। अत्र ऋचि विपतयन्तीत्यस्य नाना दिक्षु गच्छन्तीत्यर्थः।

हविषः प्रस्थितस्य वीतं हर्यतं जुषेथाम् (ऋ० १।६।३।७)। अत्र अग्नीषोमौ देवते प्रार्थ्येते। प्रपूर्वस्तिष्ठतिरत्र प्रवृत्तिं स्पन्दनलक्षणामाह, याऽन्यत्र वेदे 'पवते' इत्यनेनाभिधीयते। सायणस्त्वन्यथा गृह्णाति—होमार्थमाहवनीयं प्राप्तस्य हविष इत्येवमर्थापयते। द्रविणोदाः पिपीषति जुहोत प्र च तिष्ठत (वा० सं० २६।२२)। अत्र प्रपूर्वस्तिष्ठतिः प्रवृत्तौ व्यापारे वर्तते।

अभ्यूर्णोति यन्नग्नं (भिषक्ति विश्वं यत्तुरम्) ऋ० ८।७६।२।। अभिपूर्वं ऊर्णुञ् अभित आच्छादने वर्तते।

प्रपूर्वस्तारयतिर्लोके वञ्चनायां दृश्यते। प्रतारको वञ्चक इत्यनर्थान्तरम्। वेदे त्वन्य एवार्थः—गयस्फानः प्रतरणः सुवीर इति गवां नः स्फावयिता प्रतारयितैधीत्याह (ऐ० ब्रा० १।१३)। प्रतारयिता उत्तारणहेतुरिति सायणः। पापादित्यध्याहारः।

अवपूर्वस्तु तारिर्विनाशे दृष्टः। अयमप्यलौकिकोऽर्थः। आभिर्विश्वा अभियुजो विषूचीरार्याय विशोऽवतारीर्दासीः (ऋ० ६।२५।२)। अग्ने हंसि न्यत्रिणम् (ऋ० १०।११-१)। नितरां हंसीत्यर्थः। लोके तु निहन्तीति निघातं नीचैःकरणमाह।

तान्येकयर्चाऽवारुरुत्सत (ऐ० ब्रा० १।१२)। अवरुधिः स्वायत्तीकरणे वर्तते। लोके तु गोष्ठादौ निरोधने गोपने च दृश्यते। व्रजमवरुणद्धि गाम्। अवरोधो नामान्तःपुरं भवति यत्र राजयोषितोऽवरुध्यन्तेऽसूर्यम्पश्याः। पाण्डवास्त्रयोदशवर्षाण्यवरुद्धा विचेरुः (संवृताकारा इत्यर्थः)। अपपूर्वस्तु वेदेऽपसारणे पराकरणे वर्तते—अनुव्रतामप जायामरोधम् (ऋ० १०।३४।२)।

यस्त ऊरू विहरत्यन्तरा दम्पती शये (ऋ० १०।१६२।४)। तस्मात्स्त्र्यूरू विहरति (ऐ० ब्रा० १०।३)।

अग्नीदग्नीन् विहर (तै० सं० ६।३।१।२)। मै० सं० ३।८।१० ।। अत्र सर्वत्र विहरतिर्विश्लेषणे पृथक्करणे वर्तते।

लोकेऽदूरविप्रकर्षेणायमेवार्थः क्वचिदुच्यते। अश्रूणि विहरति। प्रमार्ष्टीत्यर्थः।

कीर्तिं बहुभ्यो विहर द्विराजे (अथर्व ५।२०।९)। अत्र विहरतिर्विभजने विभज्य दाने वर्तते।

पशुं नः सोम रक्षसि पुरुत्रा विष्ठितं जगत् (ऋ० १०।२५।६)। अत्र विष्ठितशब्देनावस्थितमुच्यते, न तु स्थानाच्च्युतम्। अद्यत्वे लोका स्थानात्प्रच्यावित्ते विष्ठापितशब्दं व्यवहरन्ति। सोऽर्थः शब्दमर्यादया दुर्लभ इति न विजानन्ति।

यावत् सप्त सिन्धवो वितष्ठिरे (अथर्व० ४।६।२)। अत्र वितष्ठिर इति विततास्तस्थुरित्यर्थमाह।

सुप्रायणा अस्मिन्यज्ञे विश्रयन्ताम् (वा० सं० २८।५)। विश्रयन्तां विव्रियन्ताम् इत्यनर्थान्तरम्।

देवीर्द्वारो विश्रयध्वम् (ऋ० ५।५।४)। अत्राप्युक्तपूर्व एवार्थः।

या न ऊरू उशती विश्रयाते (ऋ० १०।८५।३७)। अत्रापि विपूर्वः श्रयतिर्विवरणे वर्तते। अवश्यमयमेवार्थोऽभ्युपेयः, तस्मात्स्त्र्यूरू विहरतीत्युक्तचर्या ऐतरेयश्रुत्या संवादाय। सायणस्तु नः पुंसामूरू कामयमाना विशेषेण श्रयत इत्याह। सोऽस्य भ्रमः।

अहश्च कृष्णमहरर्जुनं च विवर्तेते (ऋ० ६।९।१)। विवर्तेते=पर्यावर्तेते। विवर्तेते अहनी चक्रियेव (ऋ० १।१८५।१) इत्यत्रापि स एवार्थः। शाङ्कराणामद्वैतिनां विवर्तार्थस्त्वृषेरविदितः।

उरौ पथि व्युते तस्थुरन्तः (ऋ० ३।५४।९)। अत्र पनितार इति कर्तृपदम्। विपूर्वाद् वेञो निष्ठायां व्युतमिति रूपम्। विविक्तमिति चार्थः। लोके प्रपूर्व आङ्पूर्वो वायं धातुः प्रयोगमवतरन्दृष्टः।

व्यब्रवीद् वयुना मर्त्येभ्यः (ऋ० १।१४५।५)। कद्ध रत्नं वि नो वोचः (ऋ० ४।५।१२)।

अस्ति स्विन्नु वीर्यं तत्त इन्द्र स्विदस्ति तद्दुथा विवोचः (ऋ० ६।१८।३)

वि लोके अप्सु तनये च सूरेऽवोचन्त चर्षणयो विवाचः (ऋ० ६।३१।१)

अत्र सर्वत्र विपूर्वो ब्रूञ्व्यक्तायां वाचीति धातुर्विशिष्य भाषणे व्याख्याने वर्तते। लोके तु विपरीतभाषणे प्रसिद्धः—अब्रुवन् विब्रुवन्वापि नरो भवति किल्बिषीति मनुसंहितायां यथा।

वायुर्वो विविनक्तु (वा० सं० १।१६)। वस्तण्डुलान् व्रीहिभ्यः पृथक्करोतु।

(मरुतः) विविञ्चन्ति वनस्पतीन् (ऋ० १।३९।५)।

विविच्य सन्ध्यक्षराणामकारं प्लावयेत् (आश्व० श्रौ० १।५।९)।

लोके प्रायेण सदसद्विवेचने विपूर्वो विचिर्वर्तते। क्तसु तु वेदोक्तोर्थः समुपलभ्यते। विविक्तं सेवते। विविक्तासन इति।

व्यूर्ण्वती दाशुषे वार्याणि (ऋ० ५।८०।६)। अत्र विपूर्व ऊर्णोतिर्विवरण उद्घाटने वर्तते।

वि वात वाहि यद्रपः (ऋ० १०।१३७।३)। अत्र हे वात वांस्त्वं यन्मयि दूषणं तद् दूरे गमयेत्यर्थो विवक्षितः। उपसर्गसहकारेण धातुः सकर्मकः संवृत्तः। लोके तु विपूर्व एष दिक्षु विदिक्षु सञ्चारमेवाह—वायुर्विवाति हृदयानि हरन्नराणाम् (ऋतुसं० ६।२२)।

यत् पुरुषं व्यदधुः कतिधा (ऋ० १०।९०।११)।

पाङ्क्तचोऽयं पुरुषो पञ्चधा विहितः, लोमानि त्वङ्मांसमस्थिमज्जा (ऐ० ब्रा० ६।२९)।

अन्नमशितं त्रेधा विधीयते (छां० उ० ६।५।१)।

अत्र सर्वत्र विधाञ् विभजने वर्तते। लोके तु प्रायशो विधानेऽनुष्ठानेऽर्थे प्रयोगः प्रचरति।

एतदधिविधाय ऋषिरवोचत्—पाङ्क्तं वा इदं सर्वम् (तै० उ० १।७।१)। अत्र अधिधायेत्यधिकृत्यशब्दार्थमाह। लोके त्वधिविपूर्वस्य धाञः प्रयोग एव दुर्लभः।

स्यन्दन्तां कुल्या विषिताः पुरस्तात् (ऋ० ५।८३।८)।

ये ते शुक्रासः शुचयः शुचिष्मः क्षां वपन्ति विषितासो अश्वाः (ऋ० ६।६।४)।

अत्रोदाहृतिद्वये विपूर्वः षिञ् बन्धने इति धातुर्मोचने वर्तते । सोऽयमुपसर्गकृतोऽर्थबाधः ।

वि पिबध्वं कुशिकाः सोम्यं मधु (ऋ० ३।५३।१०) । अत्र विपूर्वः पिबतिर्विविधे पाने काले कालेऽभीक्ष्णं वा पाने वर्तते ।

वि पृचौ स्थो वि मा पाप्मना पृङ्क्तम्(वा० सं० ६।४, १६।११)। पृची सम्पर्के इति धातुर्लोके सम्पूर्वकः क्वचित्केवलो वा प्रयुज्यते, विपूर्वो वियोजने वर्तमानस्तु न क्वापीतिच्छन्दोमात्रगोचरोऽयं प्रयोगः ।

आसिञ्चोदकमवधेह्येनम् (अथर्व० ६।५।५) । अधो धेहीत्यर्थः ।

पचनमवधाय महावीरमवदधाति (श० ब्रा० १४।१।२।२१) । अवदधाति अधः श्रयतीत्यनर्थान्तरम् ।

त्रितः कूपेऽवहितो देवान् हवत ऊतये (ऋ० १।१०५।१७) । अवहित इत्यधः पातितमाह । उत देवा अवहितं देवा उन्नयथा पुनः (ऋ० १०।१३७।१) । लोके त्विदमादिरर्थो बहुविदामप्यविदितः ।

ये गर्भा अवपद्यन्ते (अथर्व० ४।७।१७) ।

अनायतो अनिबद्धः कथाऽयं न्यङ्ङुत्तानोऽवपद्यते न (ऋ० ४।१३।५) ।

जामिमृत्वा माऽवपत्सि लोकात् (अथर्व० ६।१२०।२) ।

त्राध्वं कर्तादवपदो यजत्राः (ऋ० २।२६।६) ।

अत्रा कर्तमवपदात्यप्रभुः (ऋ० ६।७३।६) ।

अत्रोदाहृतिषु सर्वत्रावपूर्वः पदिः प्रपतने भ्रंशने वर्तते । उत्तमायामृचि चायं सकर्मक इति विशेषः ।

विमुच्या वयोऽवसांयाश्वान् (निरुक्ते १।१७) । अत्रावपूर्वः षो अन्तकर्मणीति विमोचने वर्तते । लोके त्ववपूर्वः स्यतिरवसानमेवाह ।

निर्वै क्षत्रं नयति हन्ति वर्चः (अथर्व० ५।१८।४) । अत्र निर्णयतिरपनयनेऽपवाहने वर्तते । सोऽयमर्थो लौकिकानामत्यन्तमविदितः ।

एवा त्वं दशमास्य सहावेहि जरायुणा (ऋ० ४।७८।८) । अत्र अवपूर्व इण् गताविति धातुरधोगमने निष्क्रमणे वर्तते । लोके तु नियमेनावगमने बोधने वर्तते ।

केनेमां भूमिमौर्णोत् केन पर्याभवद् दिवम् (अथर्व० १०।२।१८) । अत्र परि-भवतिः परिवेष्टने वर्तते । लोके तु परिभवनं तिरस्करणं नाशो वा भवति ।

शिक्षा नर समिथेषु प्रहावान् वस्वो राशिमभिनेतासि भूरिम् (ऋ० ४।२०।८) । अत्राभिनयतिराहरणेऽभिमुखं प्रापणे वा वर्तते । लोके त्वङ्गविक्षेपेण तत्तद्भावाविष्करणे प्रसिद्धः ।

पूर्वो राज्ञोऽभिवदति (श० ब्रा० ३।३।४।१४) । अत्राभिवदिराभिमुख्य-सम्पादनपूर्वके भाषणे वर्तते ।

यत्कर्म क्रियमाणमृगभिवदति (निरुक्ते) । अत्राभेर्विशिष्टोऽर्थो नास्ति ।

वेद मासो धृतव्रतो द्वादश प्रजावतः ।

वेदा य उपजायते । (ऋ० १।२५।८) ।

अत्र उपपूर्वो जनिरधिकोत्पत्तौ वर्तते । यथोपजनशब्दे ।

द्रवन्त्वस्य हरय उप नः (४।१६।१) । उपगच्छन्त्वित्यर्थः । लोके तूपद्रव उपप्लवो विघ्नो भवति । उपद्रवतीत्याक्रामतिनाऽपि समानाभिधेयो दृश्यते ।

तं हेम उगोदुर्दास्या वै त्वं पुत्रोसि (शां०ब्रा० १२।३) । उपपूर्वो वदिरपपूर्वस्य परिपूर्वस्य वा वदेरर्थे वर्तते ।

यदीं......नमस्यन्त उपवोचन्त भृगवः (ऋ० १।१२७।७) । प्रैरयन्तेत्यर्थः ।

देवासुरा यज्ञमुपावसन्नस्मभ्यमनुवक्ष्यत्यस्मभ्यमिति (ऐ० ब्रा० २।१५) । अत्रोपवसिः प्रतीक्षायां वर्तते ।

असन्धेयमिति ह विश्वामित्र उपपपाद (ऐ० ब्रा० ७।१७) । युक्तिभिरुपपा-दितवानित्यर्थः ।

येन सूक्तेन निविदमतिपद्येत न तत् पुनरुपनिवर्तेत, वास्तुहमेव तत् (ऐ० ब्रा० ३।११।३६) ।

ओष्ठोपसंहार उवर्णे (तै० प्रा० २।२४) । ओष्ठोपसंहार इत्योष्ठ-सङ्कोचमाह ।

प्राणो वातमपिपद्यते (श० ब्रा० ३।४।२।६) । अत्रापिपदिरप्यये वर्तते । प्राण-स्तमपीतो भवतीत्याह ।

यदाप उच्छुष्यन्ति वायुमेवापियन्ति (छां० उ० ४।३।२) । स्वकारणे वायौ लीयन्त इत्याह ।

देवकृतस्यैनसोऽवयजनमसि (वा० स० ८।१३)। अवपूर्वो यजिर्नाशने वर्तत इत्युवटः।

अव देवानां यज हेडो अग्ने (अथर्व० १९।३।४)। देवानां क्रोधं नाशय शमयेत्याह।

अव यक्ष्व नो वरुणं रराणः (ऋ० ४।१।५)। वरुणकृतं जलोदरादिरोगं विनाशयेत्याह।

परा शृणीहि हरसा यातुधानान् (ऋ० १०।८७।१४)। हिंसित्वा परावपेत्याह। परापूर्वः शृणातिर्बहुलं प्रयुयुज इत्यत्र पराशरशब्दे परेत्युपसर्गयोगो मानम्।

अपीव योषा जनिमानि वव्रे (ऋ० ३।३८।८)। इहापिवृणोतिरावरणे वर्तते। लोकेऽस्योपसर्गस्य वृणोतौ योगो न दृष्टः।

परा हि मे विमन्यवः पतन्ति वस्य इष्टये (ऋ० १।२५।४)। अत्र पराशब्दो वैदूर्यमाचष्टे। दूरं दूरतरं गच्छन्ति पराङ्मुखाः पुनरावृत्तिरहिता इत्यर्थः।

पक्षिणः परापातमासते (काठक० ३४।८)। परापातम्=दूरं गत्वा। पूर्णा दर्वि परापत सुपूर्णा पुनरापत (वा० स० ३।४९)। अत्रापि दूरगमनरूप एवार्थः।

तस्य रेतः परापतत् (तै० ब्रा० १।१।३।८)। अत्र परापतिः स्कन्दने वर्तते। परा शुक्लानि पातय (अथर्व० १।२३।२)। अपगमयेत्यर्थः।

अपान्यदेत्यभ्यन्यदेति विषुरूपे अहनी संचरेते (ऋ० १।२३।७)। अत्रापैतीति अभ्येतीति च प्रतियोगिनी पदे।

त्वाष्ट्रस्य त्रीणि शीर्षा परावर्क् (ऋ० १०।८।९)। परापूर्वो वृजिश्छेदने वर्तते।

परा पूर्वेषां सख्या वृणक्ति (ऋ० ६।४७।१७)।

मा नो अस्मिन्महाधने परावर्ग्भारभृद्यथा (ऋ० ८।७५।१२)। अत्रोभयत्र परावृजिः परासने पराकरणे वर्तते।

सूर्यो देवीमुषसं रोचमानां मर्यो न योषामभ्येति पश्चात् (ऋ० १।११५।२)। अत्राभ्येतिः प्रत्यनन्तरीभूयानुगमने वर्तते।

सम् पूषन् विदुषा नय यो अञ्जसाऽनुशासति (ऋ० ६।५४।१)। सन्नयेति संगमयेत्यर्थमाह। लोके समाङ्पूर्वो नयतिः प्रायेण प्रयोगस्य विषयः।

यावदेष विष्णुरभिशेते तावद् वो ददमः (श० ब्रा० १।२।५।१)। यावतीं भुवमावृत्य तिष्ठतीत्याह।

परा वा एष यज्ञं पशून् वपति योऽग्निमुद्वासयति (तै० सं० १।५।२।१)। परापूर्वो वपिर्वेदे बहुलं प्रयुज्यते परासनाद्यर्थं च ब्रूते।

ये निखाता ये परोप्ता ये दग्धा ये चोद्धिताः (अथर्व० १८।२।३४)। परोप्ता विकीर्णा इति यावत्।

आशिषश्च प्रशिषश्च संशिषो विशिषश्च याः।
चित्तानि सर्वे संकल्पाः शरीरमनुप्राविशन्॥ (अथर्व० ११।८।२७)।

आशिषः प्रार्थनानि भवन्ति, प्रशिषः प्रशासनानि शास्त्रीयाणि विधिवाक्यानि; विशिषो व्याख्यानानि भवन्ति। संशिष इत्यनेन किं विवक्षत्यृषिरिति न विद्मः। वस्तुतोऽस्यामृच्युपसर्गकृतो विशेषो दुरुन्नयः। सायणोप्यत्रोपसर्गवशाद् धात्वर्थस्य भेदोऽवगन्तव्य इति ब्रुवन्नपि नात्मनाऽपपारत्तं विवरीतुम्।

शरीरं सर्वे प्राविशन्नायुजः प्रयुजो युजः (अथर्व० ११।८।२५)। अत्रापि सायणेन समं वयमपि विवक्षितेऽर्थे व्यामुह्यामः।

ये दग्धा ये चोद्धिताः (अथर्व० १८।२।३४)। उद्धिता इत्यवहिता इत्यस्य प्रतिद्वन्द्विनमर्थमाह। अत उद्धिता उत्खाता इत्यनेन समानार्थकः।

आ हि ष्मा सूनवे पिताऽऽपिर्यजत्यापये सखा सख्ये वरेण्यः (ऋ० १।२६।३)। आङ्पूर्वो यजिर्दाने वर्तते।

यस्मै त्वमायजसे स साधत्यनर्वा क्षेति दधते सुवीर्यम् (ऋ० १।९४।२)। अत्राप्युक्तपूर्व एवार्थः।

यस्ते गर्भममीवा दुर्णामा योनिमाशये (ऋ० १०।१६२।२)।

अत्राङ्पूर्वः शीङ् आस्थान आश्रित्य स्थितौ वर्तते।

यस्त्वा भ्राता पतिर्भूत्वा जारो भूत्वा निपद्यते (ऋ० १०।१६२।१२)। निपद्यतिः सकर्मकः। संविशतीत्यर्थः। मिथुनीभवतीति यावत्।

यत्त्रिषु यूपेष्वालभेत (तै० ब्रा० १।८।६।१)।

प्रातर्वै पशूनालभन्ते (श० ब्रा० ३।७।२।४)।

वशामालभ्य संज्ञपयन्ति (श० ब्रा० ४।५।२।१)।

अत्र सर्वत्र आङ्पूर्वो लभिर्बन्धने वर्तते।

ता आलम्बमिष्टकामिष्टकामुपदध्यात्(काठक० २२।८)। अत्रोपरि दध्यादित्यर्थ इत्युप उपसर्ग उपर्यर्थे वर्तते। यथोपबर्हापरपर्याय उपधानशब्दे।

मित्रो जनान् यातयति ब्रुवाणः (ऋ० ३।५९।१)। मित्रो जनानायातयति प्रब्रुवाण इति यास्कः। (निरुक्ते १०।२२)। प्रवर्तयतीत्यर्थः। आयातनमारम्भः। तद्यथा भोजनमायातितमनेनेति दुर्गः।

अद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरन्ती (ऋ० १।१६४।४०)। आत्राङ्पूर्वश्चरतिर्विचरणे वर्तते। लोके तु दुर्लभोऽयमर्थः।

आस्थाता ते जयतु जेत्वानि (ऋ० ६।४७।२६)। आस्थातेत्याश्रयितारं रथारोहमाह।

त्वं कल्याण वसु विश्वमोपिषे (ऋ० १।३१।९)। अत्राङ्पूर्वो वपिराहरणे वर्तते। अयं परावपतेर्विपरीतमर्थमाह।

सोमराजन् संज्ञानमावपैभ्यः (अथर्व० ११।१।२३)। संज्ञानशब्देन मधूच्यते। आवपेत्यानिधेहीत्यर्थमाह।

अनामृणः कुविदादस्य रायो गवां केतं परमावर्जते नः (ऋ० १।३३।१)। आवर्जते=आवर्जयति=प्रापयति।

देवीं देवेभ्यः पर्येयुषीं गामा माऽवृक्त मर्त्यो दभ्रचेताः (ऋ० ८।१०१।१६)। पर्यावृक्त=पर्यावर्जयति, प्रतिषेधतीत्यर्थः।

यास्ते रुहः प्ररुहो यास्त आरुहो याभिरापृणसि दिवम् (अथर्व० १३।१।९)। अत्र प्ररुह उपर्युपर्याक्रमणानि भवन्ति, आरुहः समन्ताद् उपरिगमनानीत्यभिप्रैत्यृषिः।

मुष्कावर्हो गवामिव (अथर्व० ३।९।२)। मुष्कमावृहत्युन्मूलयतीति मुष्कावर्हः। पाणिनीयेऽप्याङ्पूर्वो वृहिरत्रार्थे प्रयुक्तः—मूलमस्यावर्हि (४।४।८८)।

कश्छन्दसां योगमावेद धीरः (ऋ० १०।११४।९)। आवेदनं साकल्येन वेदनं भवति।

पशूनां वाच आजानाति (पञ्च० ब्रा० १०।२।७)। य एव आविदेरर्थः स एवाजानातेः।

असौ वै लोकः प्रतिमेष ह्यन्तरिक्षलोके प्रतिमित इव (श० ब्रा० ८।३।३।५)। प्रतिमितः प्रतिबिम्बित इति यावत्।

यस्य गार्हपत्याहवनीयावन्तरेणानो वा रथो वा श्वा वा प्रतिपद्येत (ऐ० ब्रा० ७।१२)।

युष्मान् दिवा हवामहे युष्मान् प्रयत्यध्वरे (ऋ० ८।७।६)। अत्र प्रपूर्व एतिः प्रवृत्तौ वर्तते। प्रयति प्रवर्तमाने इत्यर्थः। अयमर्थो लोके दुर्लभः।

मेन्द्रो नो विष्णुर्मरुतः परिख्यन् (ऋ० ७।९३।८)। परिपूर्वश्चक्षिङ् दर्शन-विषये वर्जने वर्तते। अस्मान्परित्यज्यान्यान्मा द्राक्षुरित्यर्थः।

प्रतिचक्ष्व विचक्ष्वेन्द्रश्च सोम जागृतम् (ऋ० ७।१०४।२५)। प्रतिचक्ष्व नः प्रत्येकं पश्येत्याह। विचक्ष्वे विविधं पश्येत्याह।

मा प्रगाम पथो वयं मा यज्ञादिन्द्र सोमिनः (ऋ० १०।४७।१)। अत्र प्रगामेत्यत्र प्रशब्दो विप्रकर्षे वर्तते। यथा प्रवास इत्यत्र। यथा वा प्रगतः आचार्य प्राचार्य इत्यत्र।

तृतीयेन ज्योतिषा संविशस्व (ऋ० १०।५६।१)। अत्र संविशिरकर्मकः। संगच्छस्वेत्यर्थः।

यथा श्रेयस्यायाति पापीयान्प्रत्यवरोहेत् (श० ब्रा० ४।१।२।६)। अत्र प्रत्यवपूर्वो रुहिः प्रत्युत्थाने वर्तते। पापीयान् इति जघन्यमवरमाह न त्वेनस्विन—मागस्विनं वा।

तेनो श्रीः प्रत्युपोदिता (पञ्च० ब्रा० १०।७।२)। प्रत्युपवदिरत्रावमाननेऽर्थे प्रयुक्तः। लोके तूपवदिरुपसंभाषायामुपसान्त्वने वर्तते कर्मकरानुपवदत इत्यत्र-यथा, उपमन्त्रणे रहस्युपच्छन्दने वा परदारान् उपवदत इत्यत्र यथा।

निर्गा ऊपे यवमिव स्थिविभ्यः (ऋ० १०।६८।३)। अत्र निर्वपतिरर्पणे वर्तते। यथा निरुक्ते—अगस्त्य इन्द्राय हविर्निरुप्य मरुद्भ्यः सम्प्रदित्साञ्चकार (१।५।१३) इत्यत्र।

आयुर्मा निर्वादिष्टम् (वा० सं० ५।१७)। अक्षशब्देन मा निराकार्ष्ट-मित्याह।

वाचं विषस्य दूषणीं तामितो निरवादिषम् (अथर्व० ४।६।२)। उदचीचरम् इत्याह।

यथा वातेन प्रक्षीणा वृक्षाः शेरे न्यर्पिताः (अथर्व० १०।३।१५)। निर्पूर्व ऋच्छतिरधोगमने वर्तते। तेन न्यर्पिता इत्यधोगमिता इत्याह। ऋच्छतेरयमर्थो निर्ऋतिशब्देऽसन्देहं स्थितः।

मा त्वा निक्रन् पूर्वचित्ता निकारिणः (अथर्व० ७।८२।३)।

न त्वा निकर्तुमर्हति (अथर्व० १०।१।२६)। उभयत्र निकरोति न्यक्करणेऽधस्पदे निधाने वर्तते।

योऽभियातो निलयते त्वां रुद्र नि चिकीर्षति (अथर्व० ११।२।१३) इत्यत्रापि पूर्वेण समानोऽर्थः।

यथा पुंसो वृषण्यतः स्त्रियां निहन्यते मनः (अथर्व० ६।७०।१)। अत्र निहन्तिर्निखनने प्रयुक्तः। क्वचिल्लोके निशब्दमन्तरापि हन्तिं निखनने प्रयुञ्जते कुशलाः प्रयोक्तारः। सीम्नि पुष्कलको हतः। सीमाप्रदेशे शङ्कुर्निखात इत्यर्थः।

तं वृक्षा अपसेधन्ति छायां नो मोपगा इति (अथर्व० ५।१९।९)। अपसेधन्ति दूरे गमयन्ति। निषेधन्तीति यावत्।

यमदूतांश्चरतोऽपसेधामि सर्वान् (अथर्व० ८।२।११)। पराणुदामीत्यर्थः।

सपत्ना ये मेऽप ते भवन्तु (अथर्व० ४।३५।७)। अपहता भवन्त्वित्याह।

नापाभूत न वोऽतीतृषाम (ऋ० ४।३४।११)। मा स्मापगच्छतेत्याह। अपरक्ता मा स्म भवतेत्यभिसन्धित्सत्यृषिः।

निरुक्तमेनः कनीयो भवति (श०ब्रा० २।५।२।२०)। निरुक्तं प्रख्यापितमित्यर्थः।

अपस्कम्भस्य शल्यान्निरवोचमहं विषम् (अथर्व० ४।६।४)। निरवोचं वचसा निरगमयम् इति वक्ति।

पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् (श० ब्रा० १४।६।४।१)। पाण्डित्यं वदुष्यं निःशेषेण कार्त्स्न्येन प्राप्येत्यर्थः। अयमेवार्थः स्मृतिकारैरित्थमनूदितः—जानन्नपि हि मेधावी जडवल्लोक आचरेत् (मनु०)।

अद्य स्वप्नस्य निर्विदेऽभुञ्जतश्च रेवतः (ऋ० १।१२०।१२)। निर्विण्णोऽस्मीत्याह। निर्विद इत्यत्रागमशास्त्रस्यानित्यत्वान्नुम् न कृतः।

स्नुषा श्वशुराल्लज्जमाना निलीयमानैति (ऐ० ब्रा० ३।२२)। निलीयमाना तिरोदधती सती। लीङ् श्लेषण इति धातुः।

(वज्रेण) तेनाहममूं सेनां निलिम्पामि (अथर्व० ११।१०।१३)। यथा गोमयादिलेपेन भूतलादि निःशोध्यं क्रियते, अवस्कराद्यभावो निर्वर्त्यते तथा वज्रेण सेनाया अभावं निर्वर्तयामीत्यर्थः।

सर्वे साकं न्यलिप्सत (ऋ० १।१९१।३)।

नि केतवो जनानां न्यद्दष्टा अलिप्सत (ऋ० १।१६१।४)। इहोभयत्र पराभूति-र्विनाशोऽर्थः। सर्वे साकं न्यलिप्सत (ऋ० १।१६१।३) इत्यृग्वर्णेन संवादायोक्तार्थ एव विवक्षर्षेरिति व्यवस्यामः।

आ च परा च चरति प्रजानन् (ऋ० १०।१७।६)। आचरति=इतोऽभि-वर्तते संनिकर्षे वर्तते। पराचरति=परागच्छति, विप्रकर्षे गच्छति।

किमन्ये पर्यासतेऽस्मत्स्तोमेभिरश्विना (ऋ० ८।८।८)। लोकेऽत्रार्थेऽन्वासते उपासत इति वा व्यवहरन्ति वाग्योगविदः। अर्थे तु न कश्चन विशेषः।

अप्रतीतो जयति स धनानि (ऋ० ४।५०।९)। अप्रतीतोऽप्रतिगतोऽपराङ्मुखो भवति। अयमेवार्थोऽन्यत्र ऋक्षु अप्रत्यृत इति पदेनाभिधीयते, लोके त्वेष दुर्लभोऽर्थः।

इन्द्रप्रसूता वरुणप्रशिष्टाः (देवाः)। (ऋ० १०।६६।२)। प्रसूताः प्रेरिता भवन्ति। प्रशिष्टाश्चाज्ञप्ताः।

देवान्वसिष्ठो अमृतान्ववन्दे यो विश्वा भुवनाभि प्रतस्थुः (ऋ० १०।६५।१५)। अभिप्रतिष्ठन्ते विचरन्तीत्यर्थः।

विप्रुतं रेभमुदनि प्रवृक्तम् (ऋ० १।११६।२४)। इह प्रवृजिः प्रक्षेपणे वर्तते।

गच्छामित्रान् प्रपद्यस्व मामीषां कञ्चनोच्छिषः (ऋ० ६।७५।१६)।

इह प्रपद्यतिरास्कन्दने वर्तते। लोके त्वयं शरणागतौ दृष्टः। शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् इति गीतासु। प्रपत्तिः शरणागतिरुच्यते।
प्र वा व्रजति प्र वा धावति (श० ब्रा० २।४।१।६)। अत्र प्रपूर्वस्य व्रजतेः संन्यस्य गमनं नार्थः, त्वरितगमनमेव विवक्षितम्।

वयं घा ते अपूर्व्येन्द्र ब्रह्माणि वृत्रहन्।

पुरूतमासः पुरुहूत वज्रिवो भृतिं न प्रभरामसि (ऋ० ८।६६।११)।

अत्र प्रपूर्वो भरतिरुपहरणे वर्तते। लोके प्रपूर्वस्य भृञस्तिङन्तस्य प्रयोग एव दुर्लभः। कृति प्रत्यय एव प्राभृतं प्राभृतकमित्याद्युपलभ्यते।

ता वामद्य सुमतिभिः शुभस्पती अश्विना प्रस्तुवीमहि (ऋ० ८।२२।६)।

प्रकर्षेण स्तुम इत्येवार्थः। लोके प्रपूर्वस्य ष्टुञः स्तुत्यर्थो निगीर्यते। प्रस्तावः प्रारम्भो भवत्यवसरो वा। प्रस्तूयतेऽधिक्रियते प्रारभ्यत 'इत्यनर्थान्तरम्।

आदस्य वातो अनुवाति शोचिरस्तुर्न शर्याम् (ऋ० १।१४८।४)।

अनुवाति अनुकूलः सन्वातीत्यर्थः।

गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा (ऋ० ४।२७।१)। अनुशब्दो व्याप्तौ रूढः। अन्ववेदं साकल्येनाजानामित्याह।

पूषेमा आशा अनुवेद सर्वाः (१०।१७।५)। अत्रापि पूर्वोक्त एवार्थः।

न निविदः पदे विपरिहरेत् (ऐ० ब्रा० ३।११)। वैपरीत्येन न पठेदित्यर्थः। विपरिहरणं विपर्यासनं भवति, क्रमव्युत्क्रमणं वा।

अनु वै श्रेयांसं पर्यावर्तन्ते (ऐ० ब्रा० २।२०)। पश्चादासनं गृह्णत इत्याह।

अनुवीरैरनु पुष्यास्म गोभिरन्वश्वैरनु सर्वेण पुष्टैः (वा० सं० २६।१६)। अनुपुषिः क्रमेण वर्धने वर्तते।

उन्नो वीराँ अर्पय भेषजेभिः (ऋ० २।३३।४)। उदर्पय—उत्थापय, उल्लाघान् कुर्वित्यर्थः।

पिशाचास्तस्मान्नश्यन्ति न पापमुपजानते (अथर्व० ४।३६।८)। उपजानत उपलभन्ते, स्वस्य बोधस्य विषयं कुर्वते। लोक उपज्ञाऽऽद्यज्ञानं भवतीति प्रतीतम्। तिङि प्रयोगस्तु दुर्लभः।

यक्ष्मं शीर्षण्यं मस्तिष्काज्जिह्वाया विवृहामि ते (अथर्व० २।३३।१)। निर्गमयामीत्याह। लोके तु विपूर्वस्य वृहतेः प्रयोगो दुर्लभः।

शतेन पाशैरभिधेहि वरुणैनम् (अथर्व० ४।१६।७)।

यस्त्वा मृत्युरभ्यधत्त जायमानं सुपाशया (अथर्व० ३।११।८)।

अभि तं निर्ऋतिर्धत्तामश्वमिवाश्वाभिधान्या (अथर्व० ४।३६।१०)।

अत्र सर्वत्राभिधाञ् बन्धने वर्तते। अभिधानीति बन्धनरज्जुर्भवति।

उभोभयाविन्नुपधेहि दंष्ट्रा (ऋ० १०।८७।३)। उपरिधेहीत्यर्थः।

उप त्मनि दधानो धुर्याशून् सहस्राणि शतानि वज्रबाहुः (ऋ० ४।२९।४)। उपदधानः संयोजयन्नित्यनर्थान्तरम्।

अव द्वे अव त्रिका दिवश्चरन्ति भेषजा (ऋ० १०।५९।९)। अत्रावचरतिरवतरणे वर्तते। लोके त्ववोपसृष्टस्य चरतेः प्रयोग एव दुर्लभः, दूरेऽर्थः।

ऋबीसे अत्रिमश्विनावनीतमुन्निन्यथुः सर्वंगणं स्वस्ति (ऋ० १।११६।८)। अवनीतमित्यवहितमांह । उन्निन्यथुः=निष्क्रमयामासथुः । लोक उत्पूर्वो नयतिः प्रसिध्यति प्रयोगेषु, नावपूर्वः ।

दाशराज्ञे परियत्ताय विश्वतः सुदासे (ऋ० ७।८३।३८) । परियत्तः परिवेष्टितो रुद्धो भवति ।

अञ्जः समुद्रमवजग्मुरापः (ऋ० १।३२।२) । अत्रावपूर्वो गमिर्नीचैर्गमने वर्तते । लोके त्ववगमनं बोधनं भवति । अवगच्छति वेदार्थम् ।

अपाधमदभिशस्तीरशस्तिहा (ऋ० ८।८९।२)। अत्र ऋच्यभिशस्तिशब्देन हिंसकमरिमभिप्रैति सायणः, अरिकृतां हिंसां वा । वस्तुतोऽभिशस्तिश्चारित्र-दूषणं भवत्याक्षारणा वा । असकृद्धि वेदेऽभिशस्तिपा इत्येवं विशिष्यन्तेऽग्न्यादयो देवाः ।

मा वः परिष्ठात्सरयुः पुरीषिणी (ऋ० ५।५३।९) । सलिलस्य पूर्णा सरयुर्युष्मान्मा प्रत्यूहिष्ट, गतिप्रतिबन्धं मा स्म करोदित्याह ।

भूम्या अन्त पर्येके चरन्ति (ऋ० १०।११४।१०)। परिचरन्ति=परिभ्रमन्ति। लोके परिपूर्वश्चरतिः शुश्रूषायां प्रसिध्यति ।

इन्द्रं यं विश्वा भुवनाभिसन्दधुः (ऋ० १।१०१।६) । अभिसन्दधुराभिमुख्येन स्थापयन्ति स्वेषु कृत्येष्विति सायणः। वयं तु जानीमोऽभिसन्धिरभिप्रायो भवति, तेनाभिसन्दधतेऽभिप्रयन्ति इच्छन्तीत्यर्थ इति पश्यामः ।

अधि यदपां स्नुभिश्चराव (ऋ० ७।८८।३) । अपामुपरि नौभिश्चरावेत्युक्तं भवति । अधिचरतिरुपरिप्लवने वर्तते ।

ब्रह्म विद्वान् ब्रह्मैवाभिप्रैति (कौ० ब्रा० १।४) । अभिप्रपूर्व इण् प्राप्तौ वर्तते।

संवर्तयंस्तमः सूर्यात् (बृह० दे० २।६३)। निवर्तयन्नित्याह । अन्यत्र विरलतमोऽयमर्थः ।

विमुच्या वयोऽवसायाश्वान् (१।१०४।१)। अवसायेति विमुच्येत्यनर्थान्तरम् । स्यतिरुपसृष्टो मोचन इति निरुक्तम् ।

उतापवक्ता हृदयाविधश्चित् (१।२४।८) । अपवक्ता=निराकर्ता । धात्वर्थस्तु निराक्रियायां क्रियायामध्यवसीयते । लोकेऽपवक्ताऽपवदिता भवति ।

तत्र इन्द्रावरुणाधिवोचतम् (ऋ० ७।८३।२)। अस्मत्पक्षपातवचनो-भतमव इत्याह।

दैवीं वाचं दुन्दुभ आगुरस्व (अथर्व०)। उदीरयेत्यर्थः। लोके प्रायेणाङ्पूर्वो-गुरी उद्यमन इति हिंसार्थं दण्डाद्युद्यमनें दृश्यते।

अमित्रा येऽत्र नः सन्ति तानग्न आ द्या त्वम् (अथर्व० ६।१०४।३)। अत्राङ्-पूर्वस्य दो अवखण्डन इत्यस्य प्रयोगः। लोके त्ववपूर्व एव प्रचरति प्रयोगः।

प्रतिशुष्यतु यशो अस्य देवा यो नो दिवा दिप्सति यश्च नक्तम् (ऋ० ७।१०४।११)। प्रतिपूर्वः शुषिरत्र शोषणमात्रमेवार्थमाचष्ट इति सायणभाष्यादव-सीयते। अहन्तु मन्ये प्रतिरिह सद्योऽर्थकः, नानर्थकः। यथा प्रतिधुक् छब्देन सद्यः क्षरितं पय उच्यते यथा वा प्रत्युत्पद्यते मतिः, प्रत्युत्पन्नमतिरित्यत्र च तथैव प्रकृत इति। सद्यस्कं शोषणमेव प्रार्थ्यमानमर्थवद् भवति।

अयं चापरश्चित्रीयाकर उपसर्गकृतोऽर्थसङ्क्रमो—वेदे कलिः शयानो भवति संजिहानस्तु द्वापर इत्यैतरेयश्रुतौ सम्पूर्व ओहाङ्गताव् इति धातुः शय्यापरित्यागे वर्तते, न तु सङ्क्रमने। गत्यर्थकानि तु धात्वन्तराणि समुपसृष्टानि साहित्यसंहितं गमनमाहुः।

परिसम्पूर्व एष त्यागमात्रेऽपि। विद्युतो ज्योतिः परिसंजिहानम् (ऋ० ७।३३।१०) यथेह।

निनदीभ्यां स्नातेः कौशले इति सूत्रे निपूर्वः स्नातिः प्रसिद्धः। निस्नातः, निष्णात इति। प्रस्न इत्यत्र प्रपूर्वोपि विदितः। उत्पूर्वो विरलं विदितोऽविदितो वेति स वेद्यते—न उत्स्नाय रयिमभिप्रतस्थुरित्यृग्वर्णः (२।१५।५)। उत्स्नायोत्तीर्येत्यर्थः। अन्यत्रापि (तै० ब्रा० ३।५।७।३) शृत उत्स्नातीति प्रयोगः।

परापूर्वः षिच क्षरण इति धातुः पराकरणे वर्तते। धात्वर्थस्योपसर्गेणात्यन्तं बाधात्। मा नो गयमारे अस्मत् परासिच (ऋ० ६।८१।३)। माऽहं प्रजां परासिचम् (आश्व० श्रौ० १।११।८)।

सम्पूर्वो ग्रहिर्लोक एकीकरणे संक्षेपरणे पिण्डीकरणे वा वर्तते, वेदे तु विधारणे सन्धारणे वापि दृश्यते—इमे चिदिन्द्र रोदसी अपारे यत्संगृभ्णा मघवन्काशिरित्ते (०ऋ ३।३०।५)। संगृभ्णा समधारय इत्यर्थः। अयमेव गीतादिषु प्रथितस्य लोक-संग्रहशब्दस्यार्थः। लोकसङ्ग्रहो नाम लोकस्य सन्धारणं लोकस्थितिप्रकल्पनं भवति।

—:०:—

# उपसर्गवशाद् धातूनां सकर्मकत्वाकर्मकत्वे

उपसर्गो विशेषकृदित्यसकृदुक्तचरम् । उपसर्गेण च तथाजातीयको धात्वर्थे विशेष उपजन्यते यथाजातीयकेनाकर्मको धातुः सकर्मकतां याति सकर्मकश्चाकर्मकताम् । तदिदं लोकवेदयोः प्रसिध्यद्भिः प्रयोगैर्व्यक्तयामः ।

**श्लिषशीङ्स्थासवसजनरुहजीर्यतयः** केवला अकर्मकाः सोपसर्गास्तु सकर्मकाः । अत्र दिशः काश्चिदनुक्रामामः—

अध्ययनायोपश्लिष्यति गुरु शिष्यः । गुरौ संनिधीयत इत्यर्थः ।

अद्य देवदत्तो गुरुमुपशयिष्यते, श्वो यज्ञदत्तः । (एष तयोरुपशयने पर्यायः) ।

सुवर्गे लोकेऽप्सरस एनं जाया भूत्वोपशेरते इति व्याकरणमहाभाष्ये ।

उदीर्ष्व नार्यभि जीवलोकं गतासुमेतमुप शेष एहि (ऋ० १०।१८।८) ।

उपशेषे समीपे शेष इत्यर्थः ।

प्रतिशिश्ये जलनिधिं विधिवत्कुशसंस्तरे (भा० वन० २८३।३२) ।

अहं पतीन्नातिशये (महाभा० ३।१४६८६) । पतीनतिक्रम्य न शये, पतीनां शयनादर्वाङ् नाहं शये, नाहं संविशामीत्याह याज्ञसेनी । प्रायशोऽतिशायनशब्दोऽतिक्रमणमात्रं गुणादिभिराह । तत्र शीङ् गतिसामान्यमेवार्थमुपसङ्क्रान्त इति विज्ञेयम् ।

ज्योगेव दीर्घं तम आशयिष्ठाः (ऋ० १०।१२४।१) । आस्थाय शयनमकार्षीरित्यर्थः ।

यस्ते गर्भममीवा दुर्णामा योनिमाशये (ऋ० १०।१६२।२) । अत्र शीङ् आस्थान आश्रित्यावस्थाने वर्तते ।

कुसुमान्याशेरते षट्पदाः (विक्रमोर्वश्यां २।२३ पाठान्तरम्) ।

दत्तमिष्टमपि नान्वशेत सः (माघ० १४।४५) । दत्ते इष्टे च नान्वतप्यतेत्यर्थः ।

अत्रार्थेऽयमकर्मकोपि । तथा च भारविप्रयोगः—

पुराऽनुशेते तव चञ्चलं मनः (किरात० ८।८) । चपलं ते मनोऽचिरादनुशयमनुतापं भक्ष्यतीत्यर्थः ।

आदित्यमुपतिष्ठते । पूजयतीत्यर्थः ।

गङ्गा यमुनामुपतिष्ठते । गङ्गा यमुनामुपश्लिष्यति, यमुनया संगच्छत इत्यर्थः ।

अहरहः सन्ध्यामुपासीत ।

कस्तान्युधि समासीत जरामरणवान्नरः (भा० वन० १०।२७) । समासीतेति प्रतिरुन्धीतेत्याह ।

भीष्मद्रोणादयो युद्धे शक्याः प्रतिसमासितुम् ।

क्वचिदकर्मकोपि—तव राम रणे शक्तास्तथा प्रतिसमासितुम् (रा० ५।६७।२०) । इत्यत्र यथा ।

देवासुरा यज्ञमुपावसन्नस्मभ्यमनुवक्ष्यत्यस्मभ्यमिति (ऐ० ब्रा० २।१५) यज्ञं प्रत्यैक्षन्तेत्यर्थः ।

वनमुपवसन्ति यतयः ।

अनुजातो माणवको माणविकाम् । माणविकायाः पश्चाज्जात इत्यर्थः ।

आश्चर्यं पङ्गुर्नाम गिरिमारोक्ष्यति ।

अनुजीर्णो वृषलीं देवदत्तः । वृषल्याः कृते जरां गत इत्यर्थः । **मा माने** केवलोऽकर्मकः । यथा—

तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसम्भवा मुदः (माघ० १।२३) । प्रमदादमानिव पुरे महीयसि (माघ० १३।२) । प्रमदो हर्षः । अमान् इति मातेः शता । नञ् ।

परिपूर्वस्तु सकर्मकः, उदरं परिमाति मुष्टिना । मिमीत इत्यर्थः ।

**वृतु वर्तने**ऽकर्मकः । अनुपूर्वस्तु सकर्मकः । मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ नित्यशः । निर्पूर्वोपि—कुशाम्बेन निर्वृत्ता नगरी कौशाम्बी ।

**वैदूर्यान् काञ्चनान्दान्तान्फलैर्ज्योतीरसैः सह ।**
**कृष्णाक्षाँल्लोहिताक्षांश्च निर्वर्त्स्यामि मनोरमान् ॥**

निर्वृतिरयं निष्पत्तिमाचक्षाणोऽकर्मकोपि क्वचित् । तद्यथा—

हस्तपादशिरसां पञ्च पिण्डका निर्वर्त्तन्ते (सुश्रुते १।३२२) ।

निर्वर्तेतास्य यावद्भिरितिकर्तव्यता (मनु० ७।६१) । सिध्येदित्यर्थः । अत एव सकर्मकत्वलाभाय णिच्प्रयोगः संगच्छते—

मङ्गलोदग्रं तदहो निर्वर्तयत् (राजत० ३।२४७) ।

आङ्पूर्वस्तूभयथा दृष्टः । न च पुनरावर्तत इत्यत्राकर्मकः । आवर्तते गृहमित्यत्र च सकर्मकः ।

अतिपूर्वो वृतिस्तथाविधः । कालोऽतिवर्तते । अत्येति काल इत्यर्थः । पितुर्वचनमतिवर्तते । लङ्घत इत्यर्थः ।

**संजानातिः सकर्मकोऽकर्मकश्चार्थभेदात् ।**

मातरं संजानाति । स्मरतीत्यर्थः । अत्र सकर्मकः ।

संजानते न यतन्ते मिथस्ते (ऋ० ७।७६।५) । अत्रायमकर्मकः । संजानते संविद्रते ऐकमत्यं प्राप्ता भवन्ति ।

भृगुरपश्यद् आपो वा अस्पर्धन्त वयं पूर्वं यज्ञं वक्ष्याम इति ता एतयर्चा समज्ञपयत् समन्या यन्त्युपयन्त्यन्या (ऋ० २।३५।३) इति ताः समजानत (ऐ० ब्रा० २।२०) ।

**आङ्पूर्वः प्लवतिः सकर्मकोऽकर्मकश्चार्थभेदात्—**

सवासा जलमाप्लुत्य (मनु० ५।७७) । जले निमज्ज्येत्यर्थः ।

प्रथमो वार्षिको मासः श्रावणः सलिलाप्लुतः (रा० ४।२५।१२) । सलिलेन पूर्ण इत्यर्थः ।

स भीमसेनस्य रथम्............आपुप्लुवे सिंह इवाचलम् (महाभा० ८।४२।९८)। उत्प्लुत्यारुरोहेत्यर्थः ।

आप्लुतश्च ततो यानं चित्रसेनस्य (महाभा० ७।४६।२०) ।

समाप्लुताभ्यां नेत्राभ्यां शोकजेनाथ वारिणा (भा० वन० ५६।१३) इत्यादिषु सकर्मकः ।

स्नातक आप्लुतो व्रती (अमरे)। आप्लुतः कृतस्नानः, स्नात्वा समावृत्त इत्यर्थः।

गङ्गायामाप्लुतः शुचिः (भा० वन० ४२।२०) इत्युभयत्राकर्मकः। अतएव प्रस्नापनेर्थे णिचं प्रयुञ्जते—

माता कुमारमादायऽऽप्लाव्य (पार० गृ० २।१)।
एतेषु तीर्थेषु काशिकन्याऽऽप्लावयद् गात्राणि (महाभा० ५।३७।५६)।

सार्ववर्णिकमन्नाद्यं सन्नीयाप्लाव्य वारिणा (मनु० ३।२४४)। अभिषिच्येत्यर्थः। मूत्रेणाप्लाव्य सप्ताहं स्नुहीक्षीरे ततः परम् (सुश्रुते १।६८।१३)।

वसतिरकर्मकः। सोपसर्गकस्तु सकर्मकः। उपाङनुभिः सहचरितस्य वसेः सकर्मकस्य प्रथन्ते प्रयोगाः। निर्पूर्वस्य तु विरलः प्रयोग इति स दर्श्यते—

वासमिमं निरुष्य (महाभा० ३।६।५)।

रोहिणीं निर्वसति (सोमः) महाभा० (६।२०२३)।

अवपूर्वो लबिः सकर्मकोऽकर्मकश्चार्थानुरोधात्—

अन्तरेण तालुके स्तन इवावलम्बते (शत० ब्रा०)

स्कन्दिर् गतिशोषणयोः। आङ् पूर्वोऽवपूर्वश्च नैयत्येन सकर्मकः—

पुरीमवस्कन्दति। अरातिमास्कन्दति।

ते (मरुतः) स्पन्द्रासो नोक्षणोऽतिष्कन्दन्ति शर्वरीः। (ऋ० ५।५२।३) उक्षणः=जलस्य सेक्तारः। अतिष्कन्दन्ति=अतिक्रामन्ति।

भा दीप्तावकर्मकः। सोपसर्गस्तु सकर्मकतां याति—

यं यं लोकं मनसा संविभाति (संकल्पयति) इति मुण्डके।

एकैवोषाः सर्वमिदं विभाति (ऋ० ८।५८।२)। विभाति प्रकाशयति इति यावत्।

जीव प्राणधारणेऽकर्मकः, आङ्पूर्व उपपूर्वस्तु समाश्रयणे वर्तमानः सकर्मकः—

यमाजीवन्ति पुरुषं सर्वभूतानि संजय (भा० उद्योग० १३३।४३)

युध सम्प्रहारेऽकर्मकः। निपूर्वश्च सकर्मकः।

तानहं नियोत्स्यामि (भा० विराट० २।७)।

कोऽन्यो बृहन्नलायास्तान् प्रतियुध्येत सङ्गतान् (विराट० ६८।४२)।

तांश्च स प्रतियुध्यन्वै युद्धे राजा प्रवासितः (रा० १।७०।२६)। प्रवासितो हत इत्यर्थः। वसेश्चौरादिकस्य स्नेहच्छेदापहरणेषु पठितस्य निष्ठायां रूपम्।

रु शब्देऽकर्मकः उपसर्गवशात्सकर्मकः। सारसाभिरुताः (नद्यः)

गै शब्देऽकर्मकः, उपसर्गवशात्सकर्मकः—हंसकारण्डवोद्गीताः (नद्यः) (वनपर्वणि)

क्रमु पादविक्षेप इति धात्वर्थेन कर्मण उपसङ्ग्रहादकर्मकः। आङ्पूर्वस्तु प्रायेण सकर्मकः—

आक्रान्तं न किं केन वा (भर्तृ०), परमुद्गमनेऽर्थेऽकर्मक एव—आक्रमते सूर्यः। आक्रामति धूमो हर्म्यतलात्। निपूर्वोपि सकर्मको दृष्टः—

महान्तं चिदर्बुदं निक्रमीः पदा—(ऋ० १।५१।६)।

प्रतिपूर्वो नन्दिरभिपूर्वश्च सकर्मकतां न व्यभिचरति—

(१) तौ गुरुर्गुरुपत्नी च प्रीत्या प्रतिननन्दतुः (रघु० १।५७)। आशिषा वर्धयामासतुः।

(२) आत्मविडम्बनामभिनन्दन्ति (कादम्बरी)।

(३) अतस्ते वचो नाभिनन्दामि (शाकुन्तले)। न रोचयामीत्यर्थः।

(४) तापसोभिरभिनन्द्यमाना शकुन्तला तिष्ठति।

आङ्पूर्वस्तिष्ठतिराश्रयणे प्रतिज्ञाने वा प्रवृत्तो नित्यं सकर्मकः—आस्थितनिषेधो वक्तव्यः (वार्तिकम्)। रथमास्थितः। रथमास्थाय। अस्तिं सकारमात्रमातिष्ठन्ते वैयाकरणाः। केचिद् वैयाकरणा अस भुवि इत्यपठित्वा स भुवीत्यभ्युपगच्छन्ति।

एकं वा इदं विबभूव सर्वम् (ऋ० ८।५८।२)। नाना बभूवेत्यर्थः।

क्षौतिरकर्मकः। सोपसर्गस्तु सकर्मको दृष्टः। पक्षिजग्धं गवाघ्रातमवधूतमवक्षुतम् (मनु० ५।१२५) अवक्षुतम्=उपरिकृतक्षुतम्।

लम्बेरकर्मकस्यावस्रंसनार्थस्योपसर्गवशः सकर्मकत्वलाभो भवति न वा भवत्यर्थानुरोधात्—उर्वशी राजानमवलम्बते। चित्रलेखाहस्तालम्बिता शकुन्तला। हस्तेऽवलम्ब्य तम्—क० स० स० ५।१२१।१७३।

अवलम्ब्यापराः कण्ठे हरिम् (हरिवंशे ८३।२६)।

न च भवति — य एष स्तन इवावलम्बते (तै० उ० १।६।१)।

के भवन्तोऽवलम्बन्ते गर्तेऽस्मिन्नधोमुखाः (महाभा० १।१०।३५)।

शन्न इषिरो अभिवातु वातः (ऋ० ७।३५।४)।

सुखो वातोऽभिवाति माम् (भा० ४।२२।३८)।

वाशृ शब्द इत्यभिनोपसृष्टः सकर्मकः। नहि काको वाश्यत इत्यार्हीयत्व निवर्तते। इत्यत्र केवलोऽकर्मकः। अभि त्वा नक्तीरुषसो ववाशिरेऽग्ने वत्सं न स्वसरेषु धेनवः (ऋ० २।२।२)। इत्यत्राभिपूर्वः सकर्मकः।

वश कान्तौ इत्यस्माल्लिटि ववाशिरे इति रूपमिति भ्रमति सायणः। तथा कल्पनायां हि बह्वनुपपन्नं भवति। वाश्यते रूपस्वीकारे तु ऋज्वी प्रक्रिया।

लीङ् श्लेषणेऽनुपसर्गोऽकर्मकः, उपेनोपसृष्टस्तु सकर्मको दृष्टः, तद्यथा—

यथा सर्वाणि भूतानि मृत्योर्भीतानि मारिष। धर्ममेवोपलीयन्ते कर्मवन्ति हि यानि च॥ तथा कर्णं महेष्वासं तव पुत्रा नराधिप।

उपालीयन्त सन्त्रासात् पाण्डवस्य महात्मनः॥ (भा० ८।४१।७१)।

उपविशिः प्रायेणाकर्मकः। सकर्मकोपि बहुत्र दृष्टोऽर्थे निर्विशेषः। तद्यथा—

उपो नमोभिर्वृषभं विशेम (ऋ० ८।९६।६)।

तमार्तम्—उपाविशत्सा परिषत् समन्तात् (गोरीसिओसम्पादिते रामायणे २।७९।४०)।

द्रौपदी यत्र भर्तॄनुपाविशत् (भा० १।४७३)।

हौत्रब्रह्मत्वे स्वयं कुर्वन्ब्राह्मणासनमुपविश्य—खादिरगृह्ये (१।१।२४)।

लङ्कामुपनिविष्टे च रामे—रा० ६।१६।२६।

निपूर्वः पदिः सकर्मकोऽकर्मकश्चार्थानुरोधात्—

नारी निपद्यत उप त्वा मर्त्यं प्रेतम्— अथर्व० १८।३।१॥

देवा अग्रे न्यपद्यन्त पत्नीः (अथर्व० १४।२।३२)। पत्नीभिः समभवन्नित्यर्थः।

महिषीमश्वायोपनिपादयन्ति —श०ब्रा० (१३।५।२।२)।

प्लवतिः केवलोऽकर्मको नैयत्येन। सोपसर्गस्तु प्राप्ति-व्याप्त्यनुगमनादि ब्रुवाणः सकर्मकः सम्पद्यते। तद्यथा—

—सामभिः स्वर्गं लोकमभ्यप्लवन्त (श० ब्रा० १२।२।२।१०)।

—यश्चाधर्मं चरेल्लोभात्कामक्रोधावनुप्लवन्
(अनुप्लवः=दासः)।
अनुप्लवन्=अनुप्लवमानः=अनुगच्छन्।
अभिप्लु—रजसाभिप्लुता नारी —(मनु० ४।४१)।
व्यसनाभिप्लुतेऽपि वा—(याज्ञ० २।५०)। असाध्यव्याध्युपसृष्टे इत्यर्थः।

निष्क्रामतिरकर्मकः। अभिनिष्क्रामतिस्तु सकर्मकः—स्रुघ्नमभिनिष्क्रामति द्वारं स्रौघ्नम्।

निष्पदिरकर्मकः, अभिनिष्पदिस्तु सकर्मकः। एतां दिशमभिनिष्पद्य (शा० ब्रा० १३।८।१।६)। अभिनिष्क्रम्येत्यर्थः। अतएव सकर्मकत्वलाभाय णिचं प्रयुञ्जते वाचि कोविदाः—

प्रज्ञा चतुरो धर्मान् ब्रह्माणमभिनिष्पादयति (शा० ब्रा० ११।५।२।१)

प्रपूर्वोवृतिरकर्मकः, अभिपूर्वस्तु सकर्मकः—एतां दिशं रथोऽभिप्रवर्तताम —(ऐ० ब्रा० ८।१०)।

यत्र भागीरथीं गङ्गां यमुनाभिप्रवर्तते (रा० २।५४।२)।

आङ्पूर्वः पूङ् पवने सकर्मकः—इन्द्रस्येन्दो जठरमापवस्व (ऋ० ६।७०।१०)। केवलस्त्वकर्मकः—पवमानः पवते, वातो वातीत्यर्थः।

ते नः सहस्रिणं रयिम् पवन्तामा सुवीर्यम्—ऋ० ६।१३।५।

पवन्तां क्षारयन्तामित्यर्थः।

संविशेद् आर्तवे स्त्रियम् (मनु० ३।४८)। मिथुनीभावे संविशिः सकर्मकः, स्वापे त्वकर्मकः—संविष्टः कुशशयने निशां निनाय (रघु०)। आङ्पूर्वः सदिः सकर्मकः—आ वामुपस्थमद्रुहा देवाः सीदन्तु यज्ञियाः (ऋ० २।४१।२१)।

उपपूर्वश्च। अथैनं प्रस्तोतापससाद (छां० उ० १।११।४)। विनयेनोपपदे।

ष्ठा गति निवृत्तावकर्मकः। सोपसर्गस्त्वर्थवशात्सकर्मकोऽपि। एवं दात्यूहको हृष्टः·········प्रवदन्मन्मथाविष्टः स्वकान्तामनुतिष्ठति (रा० ३।७६।१२)।

क्वचिदुपसर्गासङ्गेऽपि तत्कृतं सकर्मकत्वं न। न तत्र संमुह्येत्सुधीरिति तदपि कलया दर्शयामः—प्रपूर्वः स्थेति क्रियान्तरमुद्दिशिलक्षणं क्रोडीकृत्य तदपेक्षया सकर्मकत्वं लभते—तद्यथा—

अथ प्रायमुपवेक्ष्यामीत्यत्रापि प्रायमनशनमुद्दिश्य कृतासनो भविष्यामीत्येवार्थः।

प्रतिशब्देऽतिरिक्तेपि स एवार्थः—आयं प्रत्युपवेक्ष्यामि यावन्मे न प्रसीदति। (रा० २।१११।१३ )

**यत्रोपसर्गकृतमर्थान्तरं यद्वशश्चाकर्मकतया प्रयोगो धातूनां सकर्मकाणां स इदानीं प्रस्तूयते विषयः।**

कश्चिदेवोपसर्गः सकर्मकस्य धातोरकर्मकतां प्रकल्पयति न सर्वोऽविशेषेण। सति च तस्मिन्नेकस्मिन्नर्थविशेष एव सकर्मकत्वमुत्पद्यते नार्थान्तरे। प्रतिनियत-विषया हि शब्दाः। तद्यथा असु क्षेपणे। स्पष्टं सकर्मकोऽयम्। उपसर्गयोगे कृतेऽर्थ-वैशिष्ट्ये सकर्मकत्वं न जहाति प्रायेण—कन्यां जातां परास्यन्ति। उदस्यति पुच्छं गौः। व्यास चतुरो वेदान् इति कृष्णद्वैपायनो व्यास इत्युच्यते। एकार्थीभावाय पदानि समस्यति। अभ्यस्यति वेदम्। शीलयतीत्यर्थः। त्रिभिरभ्यस्ता षड् अष्टादश भवन्ति। अभ्यस्ता गुणिता आहता उच्यन्ते।

असु क्षेपणे सकर्मक इत्युक्तम्। विपरिपूर्वो विभ्रमे विपर्यये वा वर्तमानोऽयम-कर्मको भवति—स्तम्भ इति जाग्रतो बुद्धिः सुपरिनिश्चिता कथं विपर्यसिष्यति (मीमांसा भाष्ये १।१।५)। दैवेनोपहतस्य बुद्धिरथवा पूर्णं विपर्यस्यति (मुद्राराक्षसे)। प्रतीकारो व्याधेः सुखमिति विपर्यस्यति जनः (भर्तृ०)।

१. विपूर्वः करोतिरकर्मकोऽपि—ओदनस्य पूर्णाश्छात्रा विकुर्वते।

२. अपाच्चतुष्पाच्छकुनिष्वालेखने। अपस्किरते वृषभो हृष्टः। भूरिति कर्म तु प्रसिद्धेः परित्यज्यते। परित्यागश्चापपूर्वमेव किरतिं गोचरयति न किरति-मात्रम्।

दिह उपचये सकर्मकः। सुधया दिग्धे सद्मभित्तीः। सम्पूर्वस्तु संशये वर्तमा-नोऽकर्मकः—ज्ञातसारोऽपि खल्वेकः सन्दिग्धे कार्यवस्तुनि (माघे २।१२)।

णह बन्धनेस कर्मकः। सम्पूर्वकस्तु सज्जीभावे वर्तमानोऽकर्मकः। नहि कुलशैल-निवहवाहिनो वायवः संनह्यन्ति अतितरले तूलराशौ (हर्षचरिते)।

षो अन्तकर्मणि सकर्मकः। अवपूर्वः पर्यवपूर्वश्चाकर्मकोऽपि। दृष्टः—शक्तिम-मावस्यति हीनयुद्धे (किराते १६।१७)।

सृजतिस्तौदादिको नित्यं सकर्मकः। उपपूर्वस्तूपगमने सामीप्यप्राप्तौ वर्त-मानोऽकर्मकः—अनाहूतोपसृष्टानामनाहूतोपजल्पिनाम् (भा० आदि० १३६।१८)। उपसृष्टा उपगता इति समानोऽर्थः।

वेष्ट वेष्टने सकर्मकः। प्रतिसम्पूर्वकः संकोचेऽथऽकर्मकः प्रतिसंवेष्टते भूमि-रग्नौ चर्माहितं यथा (भा० उद्योग०)।

णीञ् प्रापणे सकर्मकः । अपपूर्वस्तु मार्गभ्रंशमाचक्षाणोऽकर्मको भवति—न कश्चिन्नापनयते पुमानन्यत्र भार्गवात् (भा० उद्योग० ३९।३०)

वृणोतिः सकर्मकः । निर्पूर्वस्तु सोऽकर्मको दृष्टः—निर्ववार मधुनीन्द्रियवर्गः (माघे १०।३ ।)

षिच क्षरणे सकर्मकः—सिञ्चति केदारं जलेन (कुल्याभिः) । उत्पूर्वस्तु दृप्तीभावमाचक्षाणोऽकर्मकः—न तस्योत्सिषिचे मनः (रघु० १७।४३) । (नोत्सिषिचे =न जगर्व) । तथा च मल्लिः—सिञ्चतेः स्वरितेत्त्वादात्मनेपदम् ।

अनुपूर्वो वदिरकर्मकोऽपि । तत्र चानोरकर्मकादिति लिङ्गम् । अनुवदते कठः कलापस्य । अनुवदति वीणा ।

सम्पूर्वो वदिर्नित्यमकर्मकः—संवदन्त्यक्षराणि । सिद्धानां न विसंवदन्ति वाचः (अभिनन्दकृते रामचरिते १४।१००) । मिथ्या न भवन्तीत्याह ।

मृष तितिक्षायां दिवादिः सकर्मकः । मृष्यन्तु लवस्य वालिशतां तातपादाः (उ० रा० च० ६) । परिपूर्वस्त्वकर्मकोऽसूयतिना समानाभिधेयो भवति—परिमृष्यति दैवाय ।

आङ्पूर्वो ण्यन्तो लीङ् सम्माननने पूजाधिगमनेऽकर्मकः । लियः संमाननशालीनीकरणयोश्च (१।३।७०) इति सूत्रे जटाभिरुल्लापयत इत्युदाहरणम् । पूजां समधिगच्छतीत्यर्थ इति काशिका ।

हन हिंसागत्योः सकर्मकः प्रसिद्धः । यम उपरम इत्यपि । आङ्पूर्वयोरेतयोरकर्मकत्वमपि प्रसिध्यति—भित्त्याऽस्य शिर आहतेऽनवहितस्य । आयच्छन्ते लोहान्यूष्मसहचरितानि ।

घृषु संघर्षे इति सकर्मकः । संपूर्वः स्पर्धायां वर्तमानोऽकर्मकः । तथा च रघुकारस्य प्रयोगः— स प्रयोगनिपुणैः प्रयोक्तृभिः संजघर्ष सह सन्निधौ (१९।३६) ।

उपसम्पूर्वः पदि मरणे वर्तमानोऽकर्मकः—श्रोत्रिये तूपसम्पन्ने त्रिरात्रमशुचिर्भवेत्—मनु० ५।८१।। प्रमीतोपसम्पन्नप्रोक्षिता हते इत्यमरः ।

ते चेदभिनिवेक्ष्यन्ते नाभ्युपैष्यन्ति मे वचः (भा० ५।२७१८।। अभिनिविशिरिहाकर्मकोऽविवक्षितकर्मा ग्रहमभिनिवेशमाचष्टे । अन्यत्र कर्म श्रूयते सन्मार्गमभिनिविशते । गुरुभिरभिनिविष्टं लोकपालानुभावैः (रघु० २।७५) ।। अभिनिविष्टमित्यभिव्याप्तमाह ।

श्रयतिः केवलः सकर्मकः, सम्पूर्वस्त्वकर्मकोपि। तद्यथा—अभ्राणि विद्युतो वर्षमुच्छिष्टे संश्रिता श्रिता (अथर्व० ११।७।२१)

चूतेन संश्रितवती नवमलिकेयम् इति शाकुन्तले।

आङ्पदिरकर्मकोऽपि—

अर्थधर्मौ परित्यज्य यः काममनुवर्तते।

एवमापद्यते क्षिप्रं राजा दशरथो यथा ॥ (रा० २।५३।१३)

विपदमाप्नोतीत्यर्थः । एवमापद्यते (मालविका) । इदमर्थादापन्नं भवतीत्यर्थः।

एष रावणिरापादि वानराणां भयङ्करः (भट्टि १५।५६)। आपादि आपन्नः प्राप्त इत्यर्थः ।

अर्थान्तरे तु सकर्मकोऽपि—तस्य मत्स्यः पाणी आपेदे—श० ब्रा० १।८।१।

आङ् पूर्वः पतिरकर्मकोऽपि—आ न इषा वयो न पप्रता—(ऋ० १।८८।१)। आपतत=आगच्छत।

प्रवलद्वीपिनमापतन्तमुच्चैः (राजत० ३)।

तत्र काष्ठं कुठारेण पाट्यमानं विधेर्वशात्।
आपत्य तस्य जङ्घायां भित्त्वान्तः प्रविवेश तम् ॥ (कथा स० २४) ॥

निर्वहतिः प्रायेणाकर्मकः। तद्यथा—चर्यां विना योगोऽपि न निर्वहति (सर्वदर्शनसंग्रहे) न सिध्यतीत्यर्थः । तत्कर्म निर्वहेच्च नः (कथा स० ३२।३२)। सिध्येदित्यर्थः ।

गृहस्थाश्रयेण सर्वाश्रमिणो निर्वहन्ति—कुल्लूक मनु ३।७७ अर्थान्तरे तु—ओघ इमाः सर्वाः प्रजा निर्वोढा—श० ब्रा० १।८।१२ ॥ इत्यत्र सकर्मकः । निर्वोढेति निर्पूर्वाद् वहेर्लुटि रूपम् । प्लावयितेति चार्थः ।

निविशतिरकर्मकः सकर्मकश्चार्थभेदात्। मयि गोष्ठे निविशध्वम् (आश्व० गृ० २।१०।६)।

पद्मेन चैव व्यूहेन निविशेत सदा स्वयम् (मनु० ७।१८८)।

द्वारवत्यां निविशन्त्याम्—महाभा० १३।३५४४)।

विश्वमन्यन्निविशते यदेजति (ऋ० १०।३७)।

निवेष्टुकामस्तु तदा अष्टावक्रो महातपाः।

ऋषेरथ वदान्यस्य कन्यां वव्रे महात्मनः ॥

भा० १३।१९।११ ॥ निवेष्टुकामः=गृही बुभूषुः।

निविशस्वेति दुःखार्तः सन्तानस्य चिकीर्षया (भा० आदि० ४६।१४।।)

निविशस्वेत्यनेन—दारान् परिगृहाण, गृहस्थो भवेत्याह ।

अतएव सकर्मकत्वलाभाय णिच्प्रयोगः सूपपन्नो भवति—

दौःष्यन्तिमप्रतिरथं तनयं निवेश्य ।

नैवेशिकानि च ततः श्रोत्रियेभ्यो ग्रहाणि च (याज्ञ० १।३३३) । नैवेशिकानि =विवाहयोग्यानि इत्यर्थ इति मिलाक्षरा ।

निपदिरकर्मकोपि—स्वादोः फलस्य जग्ध्वाय यथाकामं निपद्यते (ऋ० १०।१४६।१५।।) । शेते इत्यर्थः ।

एष हीदं सर्वं गोपयत्यथो न निपद्यते (श० ब्रा० १४।१।४।६) ।

न निपद्यते न विश्राम्यतीत्यर्थः ।

संरभिस्त्वरायां वर्तमानोऽकर्मकः ।

अश्मन्वती रीयते, संरभध्वम् उत्तिष्ठत प्रतरता सखायः (ऋ० १०।३५।८) । (संरभध्वमिति=त्वरध्वम् इत्याह) ।

अनुपूर्वोऽपि कपि चलने क्वचिदकर्मकः । सौहृदेन तथा प्रेम्णा सदा मय्यनुकम्पसे (भा० आश्वमे० २।१०) । अन्यत्र प्रायेण सकर्मकः ।

———

श्रीशारद-ज्ञान-महोत्सवे विहितं व्याख्यानयम्

- वर्तमानभारते वेदान्तवादस्योपयोगित्वम्
- वेदानां स्वरूपम्

॥ श्रीः ॥

# वर्त्तमानभारते वेदान्तवादस्योपयोगित्वम्

## मङ्गलाचरणम्

साम्यज्ञाननिधानमानवमनोनिर्माणकर्माङ्कुरः
श्रीमच्छङ्करभावसिन्धुपवितः श्रुत्यर्थभाभावितः ।
कृत्स्नानन्दरसाम्बुधिस्थिरनिधिः स्वातन्त्र्यधीदीपनः
सोऽद्वैतद्युतिदन्तुरो विजयतां वेदान्तचिन्तामणिः ॥

ब्रह्मणे स्वान्तसन्तोषकन्दाय बन्धवैरिणे ।
नमो वेदान्तसिद्धान्तरूपिणे ध्वान्तहारिणे ॥

वक्तुर्निवेदनम्—

यो भारतात्मेव रराज राज—
श्रीलालबाहादुर इद्धकीर्त्तिः ।
स्मरामि तं सादरमद्य विद्या—
पीठे तदीयोर्ज्जितनामपूते ॥

देहलीनगरी पृथ्व्यां गरिष्ठा पृथुकीर्त्तिभिः ।
सर्वविद्याप्रतिष्ठानां काष्ठा वेदान्तदर्शनम् ॥

मन्दिरे मन्दिरे नित्यमिन्दिरा पूज्यते यथा ।
देशे देशे महामन्त्रिणीन्दिरा स्तूयते तथा ॥

ज्ञानगौरवसौरभ्येणाढ्ये भारतभूतले ।
मन्ये वेदान्तचिन्तास्रक् चिरस्तम्भेऽत्र युज्यताम् ॥

कालेऽस्मिन्नपि प्राचीनशास्त्रवाचां प्रचारतः ।
चिन्तादिग्दर्शनं भूयाच् शास्त्रिणश्चापि तर्पणम् ॥

सभासदां शास्त्रविदां कृपाप्रणयनिर्भरः।
अयुक्तं मम चेदुक्तं तस्य मर्षणमर्थये ॥
आचार्यपञ्चाननसूनुरेष देशस्य कल्याण-विशेषदृष्ट्या।
श्रीजीवशर्मा तनुतेऽनुभाव्यं व्याख्यानमान्मस्थितिरक्षणार्थम्।

ये मान्यपुष्पेन्द्रकुमाररुद्रदेवादयः सन्ति बुधा धुरीणाः।
कृतज्ञताज्ञापनतोऽद्य तेभ्यो लभेय शान्तिं मनसि स्फुरन्तीम् ॥

अयि मान्यमान्याः सभामूर्धन्याः। माननीयाः सभास्ताराः सुविचारा मनीषिणः। गीर्वाणवाणीप्रणयिनः प्रियतमा विनेयवर्गाः! जगदम्बांशभूता महनीया महिलाश्च !

अद्य तावदस्मिन् प्रातःस्मरणीयचरितशास्त्रिमहोदय-नामाङ्किते महति केन्द्रीयविद्यापीठे शारदीयज्ञानमहोत्सवस्य शुभावसरे देशकालोचितचिन्तया निर्वाचयामि मदीयभाषणविषयवस्तु 'यथा वर्तमानभारते वेदान्तवादस्योपयोगित्वम्' इति।

जानामि तत्रभवतां बहुशास्त्रपारङ्गमाणां भवतां पुरतो न भवेदज्ञातज्ञापनं नाम प्रमाणलक्षणभूतं विलक्षणमद्भुतं वा किञ्चिदिदं श्रोतव्यं मन्तव्यं वा तथापि शास्त्र-श्रद्धावतां भूतपूर्वप्रधानमन्त्रिणां भारतदेशप्रियाणां शास्त्रिमहोदयानामुद्देशेन तर्पणजलाञ्जलिदानवत्-इदं शास्त्रवार्त्तालोचनम् अप्राज्ञेनापि कृतं चेन्न दोषाय भवेदिति मनीषया प्रणोदितोऽस्मि। अपि च दर्शनशास्त्रं बुद्धिविलासमात्रप्रयोजनकं न मानवजीवनव्यवहारक्षेत्रोपयोगीति चिरन्तनापवादपरिहारकामनया, तथा लब्धेऽपि स्वातन्त्र्ये भारतं स्वराष्ट्रं प्रति न जागर्ति देशवासिनः कर्त्तव्यबुद्धिः। वरं दिने दिने वर्धतेतराम् आत्मविस्मृतिः। भोगविलासैकमात्रलक्ष्या सततमुपेक्षितराष्ट्र-कल्याणा काचिद् विजातीयचिन्तापरम्परा ग्रसत इव भारतीयान् विशेषतस्तरुणसमाजम्।

अखण्डभारतस्वार्थविरोधिनी काचिन्नवीनाचारपद्धतिर्निरन्तराया वर्षणधारेवापतन्ती-क्लेदयति क्लेशयति वेशसम्भारमिव विदुषां चिरन्तनसंस्कारम्। ईदृशदुःखदशायां भारतीयभावच्छत्रधारणेच्छया भविष्यदुत्कण्ठया चाकुण्ठितधिया प्रचोदितोऽस्मि वर्त्तमानभारतसमस्यासमाधानाध्वनि कश्चिदध्वनीनो भवितुम्। नेयं राजनीतिचर्चा न वा धर्मनीतिसमारोपणसमीहा नापि स्वकपोलकल्पितमतविशेषप्रचारवासना मां चपलयति। परन्तु स्वतन्त्रभारत—सम्पदुद्घाटनं यत्र विश्वकल्याणबीजमस्ति निहितं भारतीयजनकर्त्तव्यनिरूपणं च मनसि निधाय दभ्रसारमपि मे वाक्प्रपञ्चं भवतां पुरतो विचारार्थं स्थापयामि।

भारतीयदर्शनशास्त्रं हि सर्वेषु भावसङ्कटेषु, नीतिविवादेषु च मध्यपथमाविष्कृत्य समाधानं सामञ्जस्यं वा विदधातीति दर्शनप्रस्थानस्य वैशिष्ट्यम् ।

विदितवेदितव्यानां विदुषां भवतां पुरतो मदीयं चिन्ताभारं लघूकरिष्यन् निवेदयामि यत् प्रयत्नोऽयं मम विफलः परिहासफलो वा भवतु-तत्र न खेदमनुभवामि कालस्रोतोऽनुकूलजनसाधारणप्रवृत्तिरोधाय कः प्रभवेत् ? सृष्टिस्थितिकर्त्ता जगदीश्वर एव प्रभवति—किञ्चन कर्त्तुमकर्त्तुमन्यथा कर्त्तुं वा भगवत एव इच्छावशात् साम्प्रतिकमवाञ्छितं वृत्तजातं जाघटीति नवेति को जानाति । धियो यो नः प्रचोदयति स एव । सत्यम् ! तथापि स्मरामि भगवतो लीलामद्भुताम् अघटनघटनशीलाम् । तां प्रत्यक्षीकुर्मः साम्प्रतमेव-पाकिस्थान-वङ्गदेशसम्पराये जननी-इन्दिरापरिचालिते सति-विरोधिनिप्रबाच्यप्रतीच्यभूरिसूरिशूरबले प्रबलप्रहरणसाधने सत्यपि भारतशक्तिर्विजयिनी भूतेति विश्वविस्मयकरो भगवल्लीलाविलासः ? अपि च करालकालधर्मचिन्तया न विषीदामि । कुत इति ? वर्णयामि तावत्, ईश्वर एव सृजति ऋतुषट्कम् । तत्र कालधर्ममपि योजयति स एव । नायं मनुष्यकृतो भवति ऋतुभेदः । प्रकृत्या वा प्रकृतिमधिष्ठाय श्रीभगवता वा क्रियते ऋतूनां-सञ्चारः शीतऋतौ सर्वतो हिमप्रवाहः । ग्रीष्मेऽपि प्रचण्डातपजनितः सर्वतो विसारी तापप्रवाहः । एवम् ऋतुविशेषप्रवृत्तौ मानवाः किं सर्व एव ऋतोरभिमुखमानुकूल्येन प्रसरन्ति-अथवा प्रतिकूलमाचरन्ति ?

को वा तिष्ठति निश्चेष्टः कालस्रोतोवशं गतः ।
किं नावृणोति देहं स्वं शीतर्त्तौ हिमदर्शनात् ॥
समन्तात् सन्तते ग्रीष्मे सूर्यस्य प्रखरातपैः ॥
दीनोऽपि देहदाहाय स्वेच्छया न समीहते ॥

एवञ्चेत् कालधर्मप्रतिकूलाचरणमेव जीवानां जीवनरक्षानीतिरिति ज्ञायते । जनस्रोतसा समं कालस्रोतसो न तुलना समीचीना । काले कालगतिचिन्तया भारतीयमनीषिगणप्रज्ञा मनुष्यजीवनरक्षणाय शास्त्रीयविधिनिषेधमुखेन कर्त्तव्यमार्गनिर्देशं विदधे । प्रथमतो भारतवर्षं प्रति श्रद्धां प्रकटीकरोति महर्षिर्वेदव्यासः ।

गायन्ति देवाः खलु गीतकानि
धन्यास्तु ते भारतभूमिभागे ।

स्वर्गापवर्गास्पदमार्गभूते
भवन्ति भूयः पुरुषाः सुरत्वात् ॥ (विष्णुपुराणे)

भागवते च

अहो अमीषां किमकारि शोभनं
प्रसन्न एषां स्विदुत स्वयं हरिः ।
यैर्जन्म लब्धं नृषु भारताजिरे ।
मुकुन्दसेवौपयिकं स्पृहा हि नः ॥

मनुरप्याह—

एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ॥

एष एव महिमा भारतवर्षस्य, स्वतन्त्रभारतस्य मर्यादाबोधस्तथैवावश्यकः। सकलजगत्तलसारभूतस्य भारतस्य भूमौ लब्धजन्मानः पुरुषाः सुरत्वापेक्षया गरीयांस इत्यादिवचनैर्भारतराष्ट्रस्य वैशिष्ट्यं यत् प्रतिपादितं तत्तु तरुणचित्तेषु श्रद्धा-रेखाङ्कमर्हति। साभिमानमिदमस्माभिरुद्घोषणीयं यद् यावत्सुभारताद् बहिःस्थेषु सभ्यसमाजेषु यावन्तो मनीषिणो वर्त्तन्ते तेषां मानविकताविकाशाय यावती शुभ-चिन्ताधारा प्रवर्त्तिता—सा सर्वा भारतीयमनस्विनां मनोवर्त्मसु न नूतनतया प्रतीयते।

आधुनिकसमाजतन्त्रवादः (Communism) श्रीमद्भागवते एकेन श्लोकेनैव सुचारुरूपेण प्रदर्शितः।

यावद् भ्रियेत जठरं तावत् स्वत्वं हि देहिनाम् ।
अधिकं योऽभिमन्येत स स्तेनो दण्डमर्हति ।

मनुनाप्युक्तम्—

अद्रोहेणैव भूतानामल्पद्रोहेण वा पुनः ।
या वृत्तिस्तां समास्थाय विप्रो जीवेदनापदि ॥
ऋतमुञ्छशिलं प्रोक्तममृतं स्यादयाचितम् ॥

श्राद्धमन्त्रेष्वपि पठ्यते—

याचितारश्च नः सन्तु मा च याचिष्म कञ्चन ।

देशान्तरेभ्यो भारतीयानां व्यवहारः पृथग्रूपः सर्वदा स्मरणीयः। भारते दाता धनं परस्मै दत्त्वा स्वयं कृतार्थो भवति, न प्रतिग्रहीतारं कृतार्थीकरोति; यथा देशान्तरेषु विपरीताचारः श्रूयते।

यथा सुरभिपुष्पचन्दनधूपदीपं नैवेद्यादिभिर्भगवन्तं पूजयन्तो भारतीयाः सुन्दरसुगन्धिसुस्वादुरसमयानि वस्तूनि उपास्यदेवतायै समर्प्य स्वयं कृतार्थीभवन्ति। सुन्दरं कुसुमं परमसुन्दराय स्वेष्टदेवाय निवेद्य स्वजीवनं कुसुमादि-जनकतरु-जीवनञ्च सार्थकं मन्यते साधकः । सर्वरस-सर्वगन्धसर्वात्मक-श्रीभगवच्चरणं गन्धपुष्पमधुररसनैवेद्यादिभिरभ्यर्च्य तमेव नेदिष्ठं परमप्रेष्ठं मन्यमानः साधकः आत्मानं कृतकृत्यं सफलजीवनं सार्थकजन्मानं च मन्यते । इयमेव मानवचित्तानां कोमला वृत्तिः पूजादिकार्यद्वारा अनुशीलिता सती व्यवहारक्षेत्रेष्वपि पदं निदधाति । तथैव वेदान्तसिद्धान्तचिन्तया मननद्वारा सद्भावसङ्घटनं समाजकल्याणाय प्रभवति ।

मनुना एकादशाध्याये यथैव ब्राह्मणाः दानपात्ररूपेण निर्दिष्टा तथैवोक्तं— 'सर्वत्र गुणवद्दानं श्वपाकादिष्वपि स्मृतम्' इति तथा शास्त्रान्तरे।

'अरावप्युचितं कार्यमातिथ्यं गृहमागते'। अतिथिर्यस्य भग्नाशो गृहात् प्रति-निवर्त्तते । स तस्मै दुष्कृतं दत्त्वा पुण्यमादाय गच्छति ।

इत्यादि मानविकताविकाशकं वचनजातम् अस्माकं भविष्यदाशास्थलेन तरुणसमाजेन स्मर्तव्यम् ! शिक्षासरणीसंस्कारं विना न भावपरिवर्त्तनं सम्भवेद् विद्यार्थिनाम् । अस्य विद्यापीठस्यादर्शमनुकुर्वन्तु विद्यालयान्तराणि येनादर्शेनानु-प्राणिताः सन्तो भारतीयशिष्टाचारविशिष्टाः प्रकृष्टं शिक्षिता भवन्तु ।

प्राचीने काले धर्म एव समस्तनीतिमार्गव्यापक आसीत् । कस्तावद् धर्मः ? यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः । परन्तु यदुक्तं धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स धर्मः । तत्तु न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनामिति मानव-सामान्यस्य गतिनिर्देशाय । अन्यथा धर्मपथे स्वयं विचार्यमाणेऽपि संशयनिरासाय प्रोक्तम्—धारणाद् धर्ममित्याहुर्धर्मो धारयते प्रजाः । यत् स्यादहिंसासंयुक्तं स धर्म इति निश्चयः । अहिंसैव चरममुद्देश्यं लक्ष्यं वा यस्य कार्यस्य तद् धर्मनाम्ना-भिधेयं भवितुमर्हति । महाभारते द्रोणपर्वणि दृष्टान्तः प्रदर्शितः । अर्जुनेन प्रतिज्ञा कृता यथा यो मां गाण्डीवं त्यजेति कथयेत्तस्य शिरश्छेत्तव्यं मया ? युधिष्ठिरः कदाचित् क्लान्तः सन्नर्जुनं द्रौणिं हन्तुमादिदेश । अर्जुनः प्रधावन्नपि द्रौणिं न प्रहर्तुं शशाक । प्रत्यावृत्तः पृष्टोऽभूद्—अर्जुनो युधिष्ठिरेण—किं द्रौणिं प्रहृत-स्त्वया ? अर्जुनो नेति प्रत्युवाच । तदैव युधिष्ठिरः क्षुभितो भ्रातरमुवाच—अर्जुन ! गाण्डीवं परित्यज । अर्जुनः श्रुत्वा युधिष्ठिर-शिर कर्त्तनाय यदा चिन्तयति स्म तदा भगवान् श्रीकृष्णः सहसोपसृत्य अर्जुनस्य तत् प्रतिज्ञावाक्यं हिंसावसेयत्वान्न धर्म्यम् । तादृशप्रतिज्ञापि न धर्मः, प्रतिज्ञापालनमपि न धर्मः इति व्याहरन् अर्जुनस्य संशयं निवारयामास ।

भारतीयधर्मविचारस्थ चारुत्वं श्वः कार्यमद्य कर्त्तव्यमित्यादिकर्मविषयक-प्रेरणाया वैशिष्ट्यं पृथिव्यामन्यत्र दुर्लभमिति मन्ये। अस्मिन् महामहिमशालिनि भारतमर्यादापालिनि विद्यापीठे पटहध्वनिवद् उत्तिष्ठतां शास्त्रवादः प्रसरतु च भारतस्य दिग्दिगन्तरेषु, प्रविशतु च भारतीयानामन्तःस्थलानि।

यस्य नामाङ्कितोऽयं विद्यापीठः स विरलोदयो महोदय आसीद् भारतविभूति-विशेषः प्राच्यभावस्य धारकवाहकपरिपोषकतया सर्वजनवरेण्यः तादृशपुरुषादर्श एव वेदान्तवादः तं प्रति श्रद्धया सादरं स्मरणेन च लब्धसाहसः कालस्रोतोऽननुकूलं व्याख्यानं कुर्वन्नपि बहूनामुपेक्षां सहमानोऽपि तस्यैवादर्शपुरुषस्य सुचरितचिन्तया तथा कर्त्तव्यधिया वर्त्तमानकालोचितस्वभावनया च यदिदं व्याकरवाणि तद् आसमाप्ति तत्रभवद्भिर्भवद्भिः कृपया श्रोतव्यम्।

इदानीं प्रकृतमनुसरामि—

इदमत्र निवेद्यते यद् भारतभूमेः संस्कृतिसभ्यतानिदानभूता सदाचारपरम्परा ज्ञानविज्ञानधारा च गङ्गायमुनागोदावरीधारेव स्वतः समुत्पन्ना, न देशान्तरेभ्यः समाहृता। आधुनिकविज्ञानविद्येव प्राचीनविज्ञानविद्या न तथा विततापि नाविदितासीत्। यथा महाभारते—

कस्याश्चित् सभाया वर्णनायां दृश्यते यथा—अर्कप्रकाशा भ्राजिष्णुः सर्वतः कामरूपिणी। नातिशीता न चात्युष्णा मनसश्च प्रहर्षिणी, (महाभारते वनपर्वणि ४७ अध्याये) उज्ज्वलवैद्युतालोकस्तथा स्थितं वायुसाम्यं प्रतीयते। अध्यात्म-विज्ञानरूपवज्जड़विज्ञान-शिल्पकलादीनामप्यस्तित्वमासीदिति प्रमाणदर्शनाद-भ्युपेतव्यम्। कामसूत्रे चतुःसप्ततिसहस्रप्रकारा गन्धयुक्तयः आसन्निति उपलभ्यते। जलस्थलान्तरिक्षगामिनो विमानस्य 'सौभनगर' नामकस्योल्लेखो महाभारते सभा-पर्वणि दृश्यते।

भारतीयसभ्यताया विश्वमोहनस्वरूपं केनचिद्भूतं स्याच्चेत् तर्हि निर्व्याजं व्याहरामि यत् तद्रूपं प्रकृतिसिद्धं तपोवनसुलभं सारल्यसमुज्ज्वलं सौन्दर्यसम्भृतं प्राचीनकालादारब्धम्। तदानीं नासीदन्यदेशेषु मनुष्यवसतिरिति वास्तवी वार्त्ता। श्यामलतरुराजिच्छायासु स्निग्धशाद्वलभूमिषु नगरकोलाहलविरहिते विविक्ते गिरि-काननान्ते समासीनौ गुरुशिष्यौ। गुरुसान्निध्यवशादेव शिष्यवृन्दस्यानुभवविशेष-स्याविर्भावः "गुरोस्तु मौनं व्याख्यानं शिष्यास्तु छिन्नसंशयाः"—इति श्रद्धापूतं सहावस्थानं सकलशिष्यसंशयच्छेदि संवृत्तम्।

साम्प्रतिके काले गुरुशिष्यसम्बन्धविपर्यये जाते विशेषतो नगरे नगरे शिक्षाया बहुव्यापकतायां जातायां न सम्भवति घनिष्ठो गुरुशिष्यनिष्ठः सान्निध्यसमावेशः तथापि गुरुषु शिष्याणां श्रद्धाबद्धाचरणम् न व्याहतमासीत् कतिपयेभ्यो वर्षेभ्यः प्रागपि। अभारतीयभावं प्रति श्रेयस्करत्वबुद्धया स्वकीयशिष्टाचारान् प्रति च हेयत्वबोधेन जायते हि आत्मावमानना श्रद्धाविघटनञ्च। बहूनामेतद्देशवासिनां मनसि तथा भावना समुदेति यथा नवीने स्वतन्त्रे भारते न खलु-मात्रप्राचीना चिन्ता धारा समीचीना। प्राचीनं भारतं दरिद्रमासीत्, भोगोपकरण-द्रविण-सम्पद्-वर्धनं तथा पारिपार्श्विकप्रतिवेशिदेशविदेशप्रतिस्पर्धया प्रतिदिनमुपचीयमानं धनसाधनं चिन्तनीयम् तत्र च नवीनपद्धत्या जनजागरणद्वारा भारतराष्ट्रस्य नव संघटनमेव रक्षणोपायः। उपनिषदुक्तस्य श्रेयः प्रेयोविचारस्य चारुत्वं न रोचतां स्वाधीनभारतवासिभ्यः। इति दृढतरप्रत्ययनेयबुद्धयस्तरुणाः केचिद् आधुनिक-विज्ञानशिल्पपूर्त्तविद्यातिनिष्णाता आशानुरूपकर्मसंस्थानमलभमाना धिक्कृत-भारतीयभावाः स्वकीयसभ्यतासंस्कृतिशिष्टाचारधारामेव द्विषन्ति। परन्तु ब्रवीमि न खलु भारतीयशास्त्रं रुणद्धि समृद्धिवृद्धिकरं प्रवृत्तिमार्गम्। तथाहि मनुः—

नात्मानमवमन्येत पूर्वाभिरसमृद्धिभिः।
आमृत्योः श्रियमन्विच्छेन् नैनां मन्येत दुर्लभाम्।

वेदान्तादिशास्त्रं हि मध्यपथमुपदिशति। प्रवृत्तिश्चेदनियन्त्रिता निवृत्ति-स्पर्शशून्या केवलं भोगसर्वस्वा स्वकीयभोगबहुला स्वार्थप्रतिसन्धानपरा न कस्यापि देशस्य कल्याणाय प्रभवति। अत एवोक्तम् ईशोपनिषदि प्रथममन्त्रेण—

ईशावास्यमिदं सर्वं यत् किञ्चिज्जगत्यां जगत्।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद् धनम्॥

त्यागसहकृतभोगवादस्यैव वेदप्रतिपाद्यत्वात् साम्प्रतिके कालेऽपि तादृश-वादस्योपयोगित्वमव्याहतं प्रसरेत्। अन्यथा चेदनियन्त्रितप्रसारता प्रवृत्तिमार्गस्य दिने दिने वर्धमाना स्यात्। स्यादेव सर्वत्र जीवितसमस्या स्वार्थद्वन्द्वमूलकलोभमोह-द्वेषहिंसाक्रोधमत्सराणां विषमताण्डवम्, देशस्य शान्तिविपर्यासः परस्परं कलहाय-मानबुद्धेरुन्मेषः। भारतीयसंहतिविघटनम् राष्ट्रस्य शासनव्याघातो भवेद् दुरतिक्रमः'

'व्यवस्थितार्थमर्यादो देश एव प्रसीदति न सीदतीति' भारतीयनीतिविदां सिद्धान्तः।

साम्प्रतं भारतवर्षस्याभ्यन्तरीणा शान्तिरपि बाहुल्येन व्याहता विपर्यस्ता च

भारतीया अपि प्रदेशस्वार्थ—बृहत्तरस्वार्थं चिन्तादिना विभ्रान्ता आत्मविस्मृताश्च दृश्यन्ते ।

ये तावदस्माकं पूर्वजाः विद्वत्तल्लजाः विश्वजनकल्याणमभीप्सव आचार्याः प्रादुरभवन् तेषां वार्त्ताप्रचारेण भावविनिमयेन शिक्षाप्रतिष्ठानद्वारा तन्मतालोचनेन च भारतीयानां स्वे महिम्नि पुनः स्थापनमेव कालोचितः प्रतीकारोपाय इति मे मनीषा। यद्यपि दर्शनशास्त्रेषु शब्दानां क्षणिकत्वं द्विक्षणावसयायित्वं कदाचिद्व चतुः क्षणस्थायित्वमङ्गीक्रियते, तथापि शब्दानां प्रभावः कश्चिदाश्चर्यरूपोऽवश्यं स्वीकार्यः। शब्दपूर्वा सृष्टिरिति प्राचां सिद्धान्तः-प्रथमो मनसा सङ्कल्पः, ततो वाचाभिलापः, ततः कर्मणा चोपपादनमिति क्रममनुसृत्य भारतीयभावादर्शप्रतिष्ठा कर्त्तुं शक्यत इति मे निश्चयः। इदमपि नास्माकं चिन्तापथमतिक्रामति-यदाधुनिकविज्ञानविद्या भारतरक्षाभ्युदयकारणं स्याद् अभारतीयापि सा जात्या भवेदिति। प्राचीनशास्त्रवाणी तथैव प्रतिपादयति।

म्लेच्छा हि यवनास्तेषु सम्यक् शास्त्रं व्यवस्थितम् ।
ऋषिवत् तेऽपि पूज्यन्ते किमन्ये ब्राह्मणब्रुवः ॥

मनुरपि अवराद् विद्यामाददीतेति विधिं समर्थयामास। कतमस्या विद्याया मुख्यत्वं कतमस्याश्च गौणत्वमिति विदुषां विचारपदवीमारोहति। तत्र च निर्णयाय वेदान्तवादस्योपयोगित्वम्।

द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति परा चापरा च।···

अथ परा यया तदक्षरमधिगम्यते। एतेन यद्विद्यया ब्रह्मोपलब्धिः सम्भाव्यते सैव विद्या मुख्येति शास्त्रनिर्णयः।

देशान्तरेभ्य आहृता विद्या अपरां श्रेणीमवगाहते इति ज्ञानं शिक्षाव्रतिनां मनःसु यथा सुप्रतिष्ठितं भवेत् तदर्थम् अधीतिबोधाचरणप्रचारणैः साधनैः शिक्षार्थिगोष्ठीषु संस्कारः प्रवर्त्तनीयः। आकाशवाण्या शिक्षासरण्या वा हृदयमावर्जनीयं विद्यार्थिनाम्। स्वतन्त्रे भारते किमस्माभिर्निरुद्यमैः स्थातव्यम्: यदि भारतस्य वैशिष्टयं देशान्तरेभ्यः किञ्चिदन्यदस्ति, यल्लब्ध्वा कृतकृत्या भवन्ति वैदेशिकाः सुधियः, तद्वैशिष्ट्यं तारस्वरेण प्रचारमर्हति। वैदेशिकशासनाधीने भारते तदवैशिष्टयस्मरणबलादेव परकीयशासनपाशच्छेदाय समुद्यतं नेतृवृन्दं साफल्यमर्जयामास। लब्धे स्वातन्त्र्ये यदि वयं स्वकीयविभवविषयं न रक्षणीयं मन्येमहि, तदा स्वातन्त्र्यलाभेन किमायातम्? परन्तु

अध्यात्मविज्ञानमुदस्य वस्तु
विज्ञानमात्रं समुपासते ये।
ते रत्नसम्पत्तिमुदस्य काच-
मापातरम्यं सुलभं भजन्ते ॥

अनवद्या भारतविद्याभिमानिनी देवता वेदान्तवादप्रकाशेन जगति सर्वेषां दार्शनिकानां वैज्ञानिकानां तथा साधकानां महदाश्वासस्थानमुद्घोषयामास । दृश्यमानं जगदिदं नश्वरं, मनुष्यपशुपक्षिकीटपतङ्गतरुलता-नदनदी-गिरिप्रान्तरसागर-मरुभूमिप्रभृतयः—यद्यदस्माकं नयनगोचरो भवति, किं बहुना ग्रहनक्षत्रादि-ज्योतिष्कमण्डलं सर्वमेव परिवर्त्तनशीलं—न किमपि बाह्यवस्तुस्थिरतया निर्धारणीयम् ।

मनुष्यादिप्राणिनस्तावत्—

अहन्यहनि भूतानि गच्छन्ति यममन्दिरम् ।
पुरा यत्र स्रोतः पुलिनमधुना तत्र सरिताम्'
विपर्यासं यातो घनविरलभावः क्षितिरुहाम् ।

सिन्धुः क्व चित्तुङ्गतरङ्गसङ्कुलः क्वचिच्च योगीव साधिनिश्चलः ।
नभोऽपि मेखोदितविद्युदाकुलं कदाचिदुन्मुक्तघनं घनं परिष्कृतम् ॥

क्वचित् सुरम्यं भयदाकृति क्वचिज्ज्वलप्रचण्डद्युतिभीमदर्शनम् ।
नभश्च सिन्धुः प्रतियोगितामिव प्रणीय विश्वस्थिरतां हि गायतः ॥

देहेन्द्रियसङ्घातरूपं मनुष्यकलेवरं मृत्युकवलान्नरक्षितुं शक्यम्' इतिस्यादेव । वेदान्तवाद एव विज्ञानयोगादिमार्गजुषां विदुषामनाश्वासतापातः चिन्तास्रोतस्विनीमग्नचित्तानां दर्शनतामनाश्वासतां दूरीकृत्य एकमद्वितीयं नित्य-ज्ञानमयं तत्त्वं चरमं परमञ्च स्थापयामास । अस्ति किञ्चन स्थिरमनश्वरं वस्तु—यदाश्रित्य विश्वं दृश्यमानं प्रत्ययगोचरो भवति । 'ब्रह्म सत्यं जगन् मिथ्या' इत्याश्वासनवाणी यदा वेदान्तशास्त्रेणो दवोधितां तदा सर्वविधानां विज्ञानां हृदयं तूर्णमानन्दरसपूर्णमजायत । कियन्तः साधकः ब्रह्मविज्ञानलिप्सया कियत्तपः कृतं क्रियते च । चरमं परमं च तत्त्वं (ultimate reality) विज्ञाय बहवो वैज्ञानिका अपि चरितार्थीभूताः वेदान्तवाणीविकाशक एतद्देशस्य महिमा मुक्तकण्ठैर्मुनिभि-रुद्घोषितः । इदानीमपि दृश्यते भारताद् बहिः स्थितेभ्यः प्राच्यप्रतीच्यादि-सभ्य-देशेभ्यः समभ्येताः कियन्तो धनवन्तः पुरुषाश्चिराभ्यस्तमांसाहारकञ्चुकि-वेश-चर्मपादुकाव्यवहारान् परिहाय निरामिषाहारा गैरिकवसनावरणा नग्नचरणाः केचन योगिगुरुं नामसंकीर्त्तनसम्प्रदायगुरुं केऽपि वा वर्णाश्रमधर्मगुरुं भजमाना उपेक्षितचिरसम्बन्धिनो मानधना भारतीयामध्यात्मसम्पदं प्रति रतिं प्रदर्शयन्ति । विगते वर्षे नवदेहलीनगरे विश्वसंस्कृतसम्मेलने दूराद्दूरतरेभ्यो महादेशेभ्यः समागम्य कियन्तः संस्कृतवाणीमनुशीलयन्तः सज्जनाः भारतं प्रति श्रद्धानिदर्शनं प्रकाश्य सुखिनः प्रस्थिताः ।

इदमस्ति मदीयमाकूतम् ।

स्वतन्त्रत्वं स्वाधीनत्वमित्यादिपदघटकीभूतस्वपदस्यार्थः कः ? किं भूमिमात्रम् ?

न भूमिमात्रं किल देशरूपं
मनुष्यसाधारणमेव चिन्त्यम् ।
प्रज्ञासदाचारविचारसिद्धाः
सिद्धान्तसारा अपि सन्तु वाच्याः ॥

द्विविधं हि स्वातन्त्र्यं, भौमं मानसञ्च । आङ्ग्लानां शासनकाले भौमं परतन्त्रत्वं स्थितमपि मानसं स्वातन्त्र्यं न विपर्यस्तम् अतएव तत्कालीनाः स्वाधीनमनोवृत्तयः श्रीमत्तिलकमहात्मगान्धिसुरेन्द्रनाथमोतीलालप्रभृतयो महापुरुषाः उत्पद्यमानाः तत्प्रेरणयान्ये भारतीयाश्च भौमं स्वाधीनत्वमप्यर्जयामासुः । मानसं स्वातन्त्र्यं भौमस्वातन्त्रत्र्यमपेक्ष्य बलवत्तरम् । मानसस्वातन्त्र्ये विघटिते भौमगस्वाधीनत्वस्य विपर्ययाशङ्का समुदेति । मा भूत्तथा श्रीभगवत्करुणया, तथापि भारतस्याभ्यन्तरीणा शान्तिसन्तोषशीलता प्रजासु सदैव काम्या भवति । सैव रक्षति लोकेषु संहतिम् । संहतेर्मूलम्—धनसाम्यव्यवस्था, धनसाम्यस्य मूलं त्यागनियन्त्रितभोगप्रवृतिः, प्रतिवेशिप्रदेशेषु मैत्रीभावना च ।

एवं कार्यकारणभावे विचार्यमाणे वेदान्तसिद्धान्तं प्रति स्वत एव दृष्टिराकृष्टा भवति । इत्युपोद्घातः ।

वेदान्तस्वरूपम् ।

वेदान्तदर्शनं हि भारतीयार्षप्रज्ञाया अपूर्वा काचिदभिव्यक्तिः । दार्शनिक चिन्तायाः परमा चरमा च परिणतिः ।

मनीषी माधवाचार्यमहोदयः सर्वदर्शनसंग्रहग्रन्थे शाङ्करदर्शनम् सर्वान्ते स्थापयन् दर्शनसौधस्योच्चतमभूमिकायां तस्य स्थानं निरदिशत्। प्राथमिकंदार्शनिक चिन्ताभित्तिरूपेण, लौकायतिकं वा चार्वाक दर्शनं प्रादर्शयत् । एतदुभयोर्मध्ये चतुर्दशानां दर्शनानां संक्षेपेण बौद्ध-जैन-रामानुज—पूर्णप्रज्ञनकुलीश पाशुपत—शैव—प्रत्यभिज्ञा—रसेश्वर—वैशेषिक— नैयायिक — जैमिनीय — पाणिनीय—सांख्य — योगनामकानां सन्निवेशं कृतवान् ।

वेदानामन्तभागं शीर्षभागं वा गृहीत्वा यद्दर्शनमुद्भूतं तदेव वेदान्तनाम धत्ते । अतएवोक्तं वेदान्तो नाम उपनिषत्प्रमाणं तदुपकारीणि च शारीरकसूत्रादीनि

च । वेदव्यासप्रोक्तं शारीरकसूत्रम् । आदिपदेन श्रीशङ्कराचार्यप्रणीतं तद्भाष्यञ्च ग्रहणीयम् ।

शरीरसम्बद्धः शारीरः (शरीरपदाद् अण् प्रत्यये कृते शारीरपदं सिध्यति । ततः स्वार्थे कः, जीव इत्यर्थः स सूत्र्यते याथातथ्येन सूच्यते यैः तानि शारीरकसूत्राणि । जीवब्रह्मणोरभेदसूचनात् अद्वैतदर्शनमिति नाम्नाभिधीयते ।

'उपनिषत्' शब्दस्य द्वेधा व्युत्पत्तिर्दृश्यते । उप नि पूर्वकात् सद् धातोरुत्तरं क्विप् प्रत्यये कृते उपनिषत् पदं सिध्यति । सद् धातोरर्थद्वयं गतिः प्राप्तिर्वा, विशरणं शिथिलीकरणं वा । उपोपसर्गस्यार्थः सामीप्यम् । सर्वजीवानां समीपवर्ती आत्मा तस्य 'निः' निश्चयेन प्राप्तिः यया विद्यया सम्भवति सा उपनिषत् । अथवा सर्वजीवानां समीपस्था अविद्या, सा विशीर्यते शिथिलीक्रियते यया विद्यया सैव उपनिषत् । संसारभ्रमणस्य निदानम् अविद्या तां निश्चितरूपेण शिथिलीकरोति इति भावः । संक्षेपेण ब्रह्मविद्येति उपनिषत् पदस्यार्थः ॥

वेदवाक्यानां अपौरुषेयत्वं वेदान्तशास्त्रेऽभ्युपगतम् । मन्त्रब्राह्मणयोर्वेदनामधेयम् इति यास्कसायणाचार्यौ ।

## वेदान्तस्वरूपम्

ब्रह्मजिज्ञासा एव वेदान्तस्य प्रथमसूत्रम् । ब्रह्म ज्ञातमज्ञातं वा उभयथापि नोदेति ब्रह्मविषयकः प्रश्नः । यदि ब्रह्म सिद्धं तर्हि पुनर्ज्ञानं पिष्टपेषणमात्रम्, यदि असिद्धं, तर्हि असिद्धिविषयकः प्रश्न एव नोदेति । इत्यतः स्वीकार्यं ब्रह्मविषयकं किञ्चिज् ज्ञानमस्ति जिज्ञासूनाम् तच्च किञ्चिज् ज्ञानं कोऽहमिति प्रश्नमूलकम् । देहेन्द्रियमनोभिन्नः पदार्थः अहमितिपदवाच्य इति चेत् ! न च अहं स्थूलः, अहं कृशः, अहं सुन्दरः, अहं कुरूपः अहं गच्छामि इत्यादि व्यवहारदर्शनात्—देह एव अहंपदवाच्यः । तर्हि प्रत्यक्षसिद्धस्य देहस्य ज्ञानाय शास्त्रविचारो निष्प्रयोजनः । आलोकोद्भासितस्य घटस्य प्रत्यक्षसिद्धौ न भवति सन्देहः । सन्देहं विना जिज्ञासाया अवकाशो नास्ति ।

देहस्य अहम्पदार्थत्वे—योऽहं बाल्ये पितरौ अद्राक्षम् सोऽहमिदानीं वार्धके न पितरौ, पौत्रांस्तु पश्यामि । बाल्ययौवनादिदेहानां नाशोऽवश्यं स्वीकार्यः, देहनाशेऽपि अहं पदार्थस्य नाशो न भवतीति संशयो जायते किं तर्हि इन्द्रियाण्येव अहंपदार्थः ? वार्धके अन्धो वदति यदहं बाल्यकाले रमणीयानि कुसुमानि अपश्यम् इदानीं न तथा पश्यामि । यदीन्द्रियम् अयम्पदार्थोऽभविष्यत् नहि चक्षुरिन्द्रियघातात् परं अहंपदार्थस्यापि नाशोऽवश्यम्भावी स्यात् । अतो नेन्द्रियम् अहम्पदवाच्यम् ।

मनो भवतु नाम अहंपदार्थः । स्वप्नदशायां कदाचिद्वा देवोऽहम् कदाचिद्वा व्याघ्रोऽहमिति प्रतीतिर्भवति । स्वप्नान्ते न देवो न व्याघ्रो वाऽनुभूयते अथ च मनस्तु यथापूर्वं सङ्कल्पयति ।

अतो मनोऽपि नाहंपदार्थः । अतो देहेन्द्रियमनोभिन्नः कोऽपि पदार्थः अहम्पदवाच्यः ! स एव आत्मशब्देन बोध्यते । अहोविचित्रोऽयं देहात्मसम्बन्ध-संघटनव्यापारः । देहो जड़ आत्मा चेतनः--कुतः स्यादुभयोः सम्बन्धः । आचार्यः शङ्करः प्राह—तथापि अन्योन्यस्मिन् अन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्य इतरेतराविवेकेनात्यन्तविविक्तयोः धर्मधर्मिणोः मिथ्याज्ञाननिमित्तः सत्यानृते मिथुनीकृत्य अहमिदं ममेदमिति नैसर्गिकोऽयं लोकव्यवहारः ।

अनादिसिद्धः अविवेक एवास्य व्यवहारस्य कारणम् । अविवेकवशादेव आत्मनि देहधर्मस्य तथा देहे आत्मधर्मस्यारोपवशात् अहमिदं ममेदमित्यादि व्यवहारः सम्भवति । आत्मा-सत्यम् देहो मिथ्येति सत्यानृते मिथुनीकृत्येति सम्यगुक्तम् । अध्यास आरोपः । स्मृतिरूपः परत्र पूर्वदृष्टावभासः । तथा शुक्तौ रजतज्ञानम् । सृष्टिप्रक्रियायां वेदान्ते स्वीकृतो विवर्त्तवादः । अध्यासमूलकोऽयं विवर्तवादः ।

नैयायिकैः आरम्भवादः सांख्यपातञ्जलैः परिणामवादः वेदान्तिभिश्च विवर्त्तवादः स्वीकृतः ।

आरम्भवादे परमाणुद्वयणुकादिक्रमेण सूक्ष्मात् स्थूलस्य सृष्टिक्रमः । अवयवावयविभेदश्च स्वीकृतः । परिणामवादे—कारणे कार्यस्य सत्त्वं प्रागपि कारणव्यापारात् स्वीकृतम् । उभयमते बाह्यवस्तूनां सत्ताभ्युपगम्यते । विवर्त्तवादे—बाह्यजगतो नास्ति वास्तवं सत्त्वम् । मिथ्या मायाजालरचितं दृश्यते गन्धर्वनगरमिव जगत् । जगतो दृश्यत्वं वास्तवत्वञ्च प्राणिमात्रेणेवानुभूयते इति चेत् वेदान्तमते जगतोऽस्ति दृश्यत्वं न तु वास्तवत्वम् । दृश्यत्वं चाविवेकवशात्--नष्टेऽविवेके जगदपि न दृश्यम्भवेत् । अविवेकवशादेव द्वैतदर्शनम्, तिरोहिते च विवेके अद्वैतब्रह्मदर्शनं भवेत् । ब्रह्मविद् ब्रह्मैव भवतीति श्रुतेः । सच्चिदानन्दमयब्रह्मस्वरूपाधिगम इति महानाश्वासः ।

किं तावद् ब्रह्मलक्षणंम् ? केन प्रमाणेन ब्रह्मपदार्थः सिध्यति? "जन्माद्यस्य यतः" इति यतोऽस्य जगत उत्पत्तिस्थितिभङ्गो भवति तद् ब्रह्म । इति लक्षणं न सङ्गच्छते । इदमनुमानञ्चेत् अतीन्द्रियपदार्थस्य नानुमिति साध्यत्वम् व्याप्तिज्ञानस्याभावात् दृष्टान्तविरहान्न व्याप्तिज्ञानं सम्भवति । दृष्टान्तश्च प्रत्यक्षेणोपलब्धेः । यथा महानसम् इत्यादि । प्रत्यक्षानुमानाभ्यां न ब्रह्मपदार्थः सिध्यति ।

उपमानादिभिरपि न ब्रह्मसिद्धिर्भवितुमर्हति। उपमानादिभिः नियतानां नियन्त्रितानाञ्च विषयाणां सिद्धिरिष्यते यथा सादृश्यज्ञानात् सदशवस्तुज्ञानम्, ब्रह्मणः सादृश्यमेव नोपलभ्यते। एवमर्थापत्तिसम्भवादीनामपि अयोग्यत्वम्। अतः शब्दप्रमाणेन ब्रह्मपदार्थः सिध्येदिति चेत् तत्रापि श्रूयते "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह।' 'न तत्र चक्षुर्गच्छति न वाग्गच्छति नो मनः"—इत्यादिश्रुतिभिः ब्रह्मणोऽज्ञेयत्वमेव प्रतिपादितम्। अतएव न केनापि प्रमाणेन ब्रह्मणः सिद्धिः सम्भवतीति स्थिते—पुनः श्रुतिराह—तं त्वौपनिषदं पुरुषं पृच्छामि (बृह० ३/९/२६) आनन्दं ब्रह्मणो विन्दन् न बिभेति कुतश्चन (     ) आनन्दो ब्रह्म (तैः ३/६/१) यः सर्वज्ञः (मु० १/२९) इत्यादिश्रुतिभिः ब्रह्मणः शब्दप्रमाणज्ञेयत्वं प्रतिपादितम्। उभयविधश्रुतीनां सामञ्जस्ये कृते इदमेव प्रतीयते यथा वाक्यजन्यबुद्धिविषयो न स्यात् ब्रह्म, परन्तु स्वयं ज्ञानात्मना प्रकाशत इति। घटादिप्रत्यक्षस्थले घटो भवति विषयः, तज्ज्ञानं हि चिदाभासः चिदंशो वा। अत्र घटोऽचित्स्वरूपः, चिदाभासः अचिदावरणं तिरोहितं भवति, अर्थात् चिदाभासे घट आत्मानमर्पयति यथा, तथा वाचा अगम्यमिति श्रुत्या वाक्यजन्यवृत्तिविषयो न भवति ब्रह्म, स्वयं ज्ञानरूपेण प्रकाशत इति तात्पर्यम्। स्वतः प्रकाशत्वात् प्रमेयं ब्रह्मेति निर्विवादम्।
यदुक्तम्

> अनाधेयफलत्वेन श्रुतेर्ब्रह्म न गोचरः।
> प्रमेयं प्रमितौ तु स्यादात्माकारसमर्पणात्॥

ब्रह्म कदापि श्रुतिवाक्यजन्यज्ञाने आधेयं विषयो न भवति, अतः श्रुतेरगोचर इति संगच्छते। पुनःस्वयम् आत्माकाराभिन्नतया प्रकाश्यत्वात् प्रमेयं भवति। वेदान्तदर्शनस्य श्रुत्येकप्रमाणकत्वात् श्रुतीनाञ्च बहुत्वात् आचार्यपादैः प्रथमाध्याये श्रुतिसमन्वयः साधितः। आस्तिकदर्शनानां सर्वेषामेव श्रुतिप्रमाणकत्वं न व्याहतम्। तत्र द्वैतवादिनो विशिष्टाद्वैतवादिनो द्वैताद्वैतवादिनः शुद्धाद्वैतवादिनः सरूपाद्वैतवादिनः सर्व एव श्रुतिमूलमाश्रयन्तः कृतकृत्यतामनुभवन्ति।

एवं बहुविधश्रुतीनां समन्वयसाधनाय मीमांसादर्शनसम्मता नीतिरवलम्बिता।

> उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्।
> अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये॥

उपक्रमोपसंहारौ, अभ्यासः, अपूर्वता, फलम्, अर्थवादः, उपपत्तिश्चेति षड् विधिनियमप्रयोगद्वारा श्रुतीनाम् अद्वैते ब्रह्मणि तात्पर्यं निर्णीतम्।

छान्दोग्योपनिषदि षष्ठप्रपाठके प्रकरणमेकमारब्धम् । आरम्भे 'सदेव सौम्येदमग्र आसीत्, तत्र एकमेवाद्वितीयम् उपसंहारे च—'एतदात्म्यमिदं सर्वम्, तत् सर्वम्, तत् सत्यम् स आत्मा 'तत्त्वमसि श्वेतकेतो इत्यादिश्रुतिभिरद्वैतं ब्रह्मैव प्रतिपादितम् तथा जीवब्रह्मणोरैक्यम् । सर्वजीवानुस्यूतमेकं ब्रह्म ध्यायतः निरन्तरं तादृशध्यानाभ्यासं कुर्वतः पुरुषस्य य आनन्दसन्देहोदयो भवति, स एव परमोलाभः ।

"यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।"

इति जीवनस्य कृतार्थता साधिता ।

एवमेव सर्बासां श्रुतीनामुपनिषद्मतानां समन्वयशोधनपूर्वकमद्वैतब्रह्म-प्रतिपादनं कृतम् ।

वेदान्तस्वरूपज्ञानेन च मानवानामन्यविधैव विचारशक्तिर्बुद्धिवृत्तिस्तथौदा-र्यानुकुलप्रवृत्तिः सञ्जायते ।

वर्त्तमानभारते जनगणजागरणाय वेदान्तवाणी प्रचारणीया । प्रचारप्रकारं पुनरालोचयामि ।

बहुविवादग्रस्तं श्रुतिवचनानामपौरुषेयत्वं वेदान्तदर्शने स्वीकृतम् । तत्र नैया-यिकैरीश्वरवाक्यत्वमनुमानप्रमाणबलात् साधितम् । पाश्चात्त्यकोविदानां तद्भा-वानुयायिप्राच्यानां मते श्रुतिवचनानां मनुष्यप्रणीतत्वमिति विसंवादे सत्यपि वेदान्तदर्शने—श्रुतिप्रमाणं "महाभूतस्य निःश्वसित" रूपेण वेदानामुत्पत्तिः इति अपौरुषेयत्वपक्षे साधकम् 'तस्माद् यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे । छन्दांसि जज्ञिरे तस्माद् यजुस्तस्मादजायत, इति श्रुत्या यज्ञयोनित्वं वेदानामित्यतोऽपि अपौरु-षेयत्वं सिद्ध्यति । न स्वयं स्वस्कन्धमारोढुं शक्त इतिन्यायात् श्रुतेः प्रामाण्यबलात् श्रुतेरपौरुषेयत्वस्थापनं नोचितमिति कृत्वा युक्तिरपि प्रदर्शिता वेदान्तदर्शने । वेदे ये तावत् विधयो दृश्यन्ते यथा अश्वमेधेन स्वर्गकामो यजेतेत्यादयः अश्वमेघयज्ञः स्वर्गफलकः इति मनेष्यवुद्धेरगोचरः । अचिन्त्यभावानां कार्यकारणभावकल्पना न खलु मनुष्यकृता सम्भवति । कारीरीष्टिप्रभृतिस्थले कार्यकारणभावस्य सिद्धिः प्रत्येक्षणावगम्यते'—साङ्गतिश्रौतात् कर्मणः फलावश्यम्भावनियमः' न केनाप्य-पलपितुं शक्यते ।

न "कश्चिद् वेदकर्त्ता पितामहः" विरूपनित्यया वाचेत्यादिपुराणवचनाच्च वेदानामपौरुषेयत्वं सिध्यति ।

श्रुतिषु प्रतिष्ठिता श्रद्धा भारतीयानां परमकल्याणाय भविष्यति ।

इति विचारात्मकं वेदान्तवादस्वरूपं संक्षेपेण विवृतम् ।

इदानीं वेदान्तस्य ध्येयं स्वरूपं विशदीकरोमि ।

ईशोपनिषद् आह—

यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति ।
सर्वभूतेषु चात्मानं ततो न विजुगुप्सते ॥

यस्मिन् सर्वाणि भूतान्यात्मैवाभूद् विजानतः ।
तत्र को मोहः कःशोक एकत्वमनुपश्यतः ॥

श्रीभगवद्गीतापि तववार्थमनुवदति—

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
ईक्ष्यते योगयुक्तात्मा सर्वत्र समदर्शनः ।

यो मां पश्यति सर्वत्र सर्वञ्च मयि पश्यति ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥
(६ अ० २९-३०)

सर्वभूतस्थितं यो मां भजत्येकत्वमाश्रितः ।
सर्वथा वर्त्तमानोऽपि स योगी मयि वर्त्तते ।

आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ।
सुखं वा यदि वा दु;खं स योगी परमो मतः ।

सर्वस्मृतिमूर्धन्यभूता मनुसंहिता तमेव भावमभिनन्दति ।

सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ।
समं पश्यन्नात्मयाजो स्वाराज्यमधिगच्छति ॥

सर्वेषामपि चैतेषामात्मज्ञानं परं स्मृतम् ।
तद्धय्ग्रं सर्वविद्यानां प्राप्यते ह्यमृतं ततः ॥ (१५ अः)

वेदाभ्यासतपःसंयमादीनां सर्वेषामपेक्षया आत्मज्ञानं हि विशिष्यते । आत्मज्ञानं सर्वविद्यानां मध्ये श्रेष्ठं तस्मात् मानवानां मोक्षलाभः सम्भवति ।

आत्मनः सर्वव्यापकत्वज्ञानं सर्वं मनुष्यान्तर्गत एक एवात्मा विराजत इति सम्यक् प्रतीतिर्भवति चेत् तादृशपुरुषस्य शोकमोहादिरूपम् अज्ञानं चिराय विनश्यति ।

सर्वप्राणिषु चेदात्मसत्ताम् आत्मनि च सर्वप्राणिसत्तामनुभवति कश्चित्, तस्य सकलजगज्जीवो निजाववय इव प्रतीतिगम्यो भवति । यद्यपि कठोरसाधनालभ्येयं भावनासिद्धिः, तथापि तादृशी भावनैव मानसप्राशस्त्यसम्पादिकेति वेदान्तवादस्य विश्वजनीनत्वं सूचयति ।

वर्त्तमानभारते वेदान्तस्योपयोगित्वम्

एक एव आत्मा सर्वजीवानुगत इति भावो ध्यानधारणाविषयीभूत: सर्वमानवेषु-जातिधर्मनिर्विशेषु प्रेमदृष्टि विकाशयति अयं निज: परो वेति बुद्धि शिथिलीकरोति । न खलु श्रवणमात्रेण तथा भवति । श्रवणानन्तरं मननमभ्यसनीयं मननात् परं निदिध्यासनम् आवश्यकम् निदिध्यासनं विना न सर्वमानवेष्वेका दृष्टि: सम्भवति । "विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि । शुनि चैव श्वपाके च पण्डिता: समदर्शिन: ।" वस्तुत: समदर्शित्वंसाधना साध्यम् । यद्यपि प्रतिव्यक्ति तथाविध-साधनाया अवसर एव नास्ति । जीविकार्जनार्थं यतमानाया व्यक्ते: क्वचिदपि काले न स्यात् तथाविधसाधनावकाश इति वस्तुस्थिति: । तथापि स्मरामि श्रीभगवद्-गीतावाक्यम्—"अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव" (१२ अ:०) । ध्यान-धारणाभ्यासासमर्थानां नृणां नित्यकर्मसम्पादनकाले एव वेदान्ततत्त्व-भाव आत्मा समागच्छति ।

वेदान्तवाणी विश्वमानवानां भावगतां संहृतिमभिलक्ष्य प्रवर्त्तिता ।

सत्यपि मानवानां बहुधा भेदे वर्णरूपरुचिदेशवेशसमाजपरिवेशभेदे, किं बहुना रुधिरगतश्रेणितारतम्ये सत्यपि वेदान्तवाक् प्रकाशयति ततोऽपि सूक्ष्मतरं मानवानामैक्यसूत्रम् । तथाहि—

आत्मा हि परं ब्रह्म, आत्मैव सर्वव्यापक: सर्वभूतान्तरस्थ: सर्वमानवान्त-र्यामी—यस्य ज्ञानेन सर्वमानवेषु समाना दृष्टि: रागद्वेषपरिहार: समान-सप्रणय-व्यवहारश्च प्रसरति ।

ये तावन्मन्यन्ते एकत्र पानभोजनव्यवहार एव साम्यकारणम् । ते प्रत्यहं पश्यन्ति सारमेया: एकस्मिन् पत्रे पात्रे वा कृतभोजना: अपि परस्परं हिंसन्ति । पशुदृष्टान्तं विहाय मनुष्येषु यदि दृष्टि विक्षिप्येत, तदा दृश्यते माहम्मदीयेषु क्रैस्तवेषु च एकस्मिन् पात्रे भोज्यानि भुक्त्वा पतिर्वा पत्नी वा विवाहविच्छेदाय धावति । वृत्तपत्रे प्रकाशीक्रियतेस्म यथा तादृशविवाहबन्धनच्छेदा: अप्रत्याशितरूपेण संख्याधिकतां गच्छान्ति ।

वस्तुत: पानभोजनविचारधारा स्थिता भारतवर्ष एव । जातिभेदपान-भोजनव्यवस्थाभेदरहितेषु प्राच्यपाश्चात्त्यदेशेषु यथा समरस्पृहा समुदेति न तथा भारतवर्षे । अथ च साम्प्रतिके काले भारतेऽपि पानभोजनादिव्यवस्था शिथिली-भूता । तथापि दृश्यते राजनैतिक सम्प्रदायानां बहुशाखानेको मतभेदश्च । अतएव जातिभेदपानभोजनभेदो बहिरङ्गभूतो संहृतिसाधनं प्रति न साधको नापि बाधको भवत: । स्वार्थधीरेव बलीयसी ।

भारतीयानां संहति संघटनाय कारणान्तरमवश्यं मृग्यम्। भारतवर्षस्य प्राचीनसामाजिकेतिहासपर्यालोचनेन ज्ञायते यथा—भारतवर्षस्य प्राथमिकधर्म-स्वरूपं यज्ञात्मना प्रकाशितम्। यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्।

यज्ञेषु मन्त्रपाठो ब्राह्मणद्वारा, क्षत्रियद्वारा, याज्यता, यज्ञोपकरणघृत-दधिदुग्धादिद्रव्यसंग्रहो वैश्यद्वारा, होमीयकाष्ठ स्रुद्दर्वीजुहूचमसादिदारुमय-पात्राणां निर्भातृत्वं संग्राहकत्वं च शूद्रद्वारा निर्वाहितम्।

एकस्मिन् यज्ञरूपधर्मानुष्ठाने सर्वेषामेव मानवानाम् एककार्यप्रयोजकतया महती संहतिर्युक्तिसमापत्तिश्च सम्बभूव। विभिन्नगोष्ठीयमानवानां कर्मभेद निबन्धनो वर्णभेदो न कस्यापि द्वेषकारणमभूत्। पवित्रयज्ञकर्मनिर्वाहकतया सर्वेषां मनोवृत्तिगता साम्यबुद्धिः सुतरामजायत।

प्रतिमानवं मनोवृत्तिभेदस्तु स्वाभाविकः, मानसवृत्तिवदेव च मानवेषु भेद-बुद्धिः संजायते। अतो ब्राह्मणादीनां सर्वेषां यथा संहतिरव्याहता तिष्ठेत् तदर्थं यज्ञान्ते यज्ञपुरुषं प्रार्थयन्तेस्म ऋत्विजः।

संगच्छध्वं संवदध्वं संवोमनांसि जानताम्। हे स्तोतारः। संगच्छध्वं संहता भवत। संवदध्वं सह वदत। परस्परं विरोधं परिहाय एकविधमेव वाक्यं शृणुत। वो युष्माकं मनांसि संजानताम् समानमेकरूपमेवार्थमवगच्छन्तु।

**समानी व आकूतिः समाना हृदयानि वः।**
**समानमस्तु वो मनो यथा वः सुसहासति।**

हे ऋत्विग्यजमानाः। वः युष्माकम् आकूतिः सङ्कल्पः अध्यवसायः समानी एकविधोऽस्तु। तथा वः युष्माकं हृदयानि समानानि एकविधानि सन्तु। तथा वः युष्माकं मनः अन्तःकरणं समानमस्तु। यथा वः युष्माकं सुसहं साहित्यम् असति भवति तथा समानमस्तु।

समग्र ऋग्वेदस्यान्ते प्रार्थनेयम्। यजुर्वेदेऽपि दृश्यते मन्त्रः संहतिसूचकः 'यथेमां वाचं कल्याणीमावदानि जनेभ्यः' ··· ब्रह्मराजन्याभ्यां शूद्राय चार्याय चारणाय च।

इमां कल्याणीम् अनुद्वेगकरीं वाचम् यतः आवदानि सर्वतः ब्रवीमि दीयतां भुज्यतामिति सर्वेभ्यो वच्मि ब्राह्मणाय क्षत्रियाय शूद्राय वैश्याय आत्मीयाय अरणाय पराय। अरणः नास्ति रणः शब्दो येन सह वाक्सम्बन्धरहितः शत्रुः तस्मै अपि इमां कल्याणीं वाचम् आवदानि। इति प्रार्थनामुखेन वाक्यसम्बन्धरहितस्य शत्रोरपि कल्याणकामना यथोपलभ्यते तथा ध्यानाभ्यासरसेनापि विश्वमानवानाम् आत्मैकत्वचित्रणद्वारा रागद्वेषपरिहारो साम्यबोधोऽपि जनयितुं शक्यते।

राष्ट्रद्वारा धनसाम्यव्यवस्थया कियन्तं कालं यावत् लोकेषु संहतिरक्षा भवति नतु स्थायिफललाभः सम्भवेत् । वेदान्तवादस्य ध्यानधारणादिमानसयोगेऽसमर्थानां नृणां नित्यकर्ममध्ये "आब्रह्मस्तम्बपर्यन्तं जगत्तृप्यतु" इत्यादि तर्पणकर्मणा, तथा सर्वव्यापकविष्णुसत्ताचिन्तापूर्वकेन विष्णोराराधनेन मानसोन्नतिसाधनं ततश्च ध्यानादिकर्मयोग्यता क्रमादायाति ।

विधिवदधीतवेदवेदाङ्गः शमदमादिसाधनसम्पत्तिविशिष्टः निष्कामः सन्यासी वेदान्तशास्त्रस्य प्रकृताधिकारी । तादृशाधिकारिणां संख्याल्पत्वेऽपि वेदान्तसिद्धान्तस्य सर्वत्र प्रचारेण भोग्यवस्तुषु कथञ्चित् क्षीणा भवेदत्यासक्तिः । अद्यत्वे भोगस्यासक्तिः प्रभुत्वप्रियता, स्वार्थपरता समस्तजगतः शान्तिं विघटयति । भारतवर्षमेकमेव राष्ट्रं शान्तिप्रियं स्थितं त्यागमिश्रभोगमार्यगामि । समन्तात् परराष्ट्राणां दृष्टान्तदर्शनात् विश्रान्तिमाश्रयति शनैः शनैः । जगदादर्शभूतायां भारतभूमौ वर्त्तमानकाले प्रतितरुणहृदयगह्वरं यथा वेदान्तचिन्तामणि ज्योतिर्द्योतितं तदर्थं महती समीहा सन्धातव्या ।

अयमस्माकमाशयः—वसुधेयं सत्यं वसुप्रसविनी, किन्तु सर्वेषां वसुधामधिवसतां स्त्रीपुरुषकुमारतरुणस्थविराणां समरूपेण विलासवासनानुरूप-भूरितमवसूत्पादिनी भवेन्नवेति सुधीभिर्विभाव्यम् । पाश्चात्यनीतिरन्यविधा । "भोगविलासं वर्द्धय वर्द्धय – नव नव दैन्यं कल्पय कल्पय इत्यादिरूपां नीतिमालम्ब्य यथा सम्पद् वृद्धिरिष्यते तथैव मानवानां भोगेच्छापि दिने दिने वर्धमाना दृश्यते । महाभारते कामनाया दुष्पूरत्वं लक्ष्यीकृत्याभिहितम् ।

**यत् पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ।**
**एकस्यैव न पर्याप्तं तस्मात् तृष्णां परित्यजेत् ।**

तृष्णायाः ह्रासः सदा वाञ्छनीयः । अयमेव भारतीयो भावः । "न जातु कामः कामानामुपभोगेन शाम्यति । हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ।"

कामनासंयम एवं शान्तिसन्तोषनिदानम् । वेदान्ततत्त्वचिन्तया संसारस्य नश्वरत्वभावनया प्रशमेदेव कामनाया दुर्दमो वेगः । इदमेव वेदान्तवाद्स्योपयोगित्वम् । प्रकृताधिकारिणः चतुर्थाश्रमिणः पूर्णसंन्यासः, मध्याधिकारिणां गृहस्थानां काम्यविषयेष्वतिरागं प्रशमयति वेदान्तवादो विश्वकल्याणाय च प्रभवति ।।

—श्रीश्रीजीवन्यायतीर्थः

—:०:—